उपाध्यायजी



श्री १००८ श्रीमद्-वीरविजयजी महाराज







# समर्पणम्।





"शार्दूलविक्रीडितम्।"

संसारार्णवभव्यशुक्तिहृदये सम्यक्त्वमुक्ताप्रसूः!,
सत्प्रेम्णा विबुधान्तिषद्महितपद्मागिन्द्रसद्वाचक!।
स्वःस्थश्रीविजयान्त्यवीरमुनिराट् ते पाणिपद्मेऽर्प्यते,
सत्प्रेम्णा विबुधान्तिषद्महितपद्मागिन्द्रसद्वाचक!॥१॥



# कर्म्मसिद्धिः ।





प्रणेता—

अनुयोगाचार्य्य-श्रीमत्प्रेमविजय-गणी ।




देहो यस्य निरामयोऽतुलशुचिर्नेत्रं नयन्भृङ्गतां,
श्वासो यस्य पयोजगन्धतुलितः केऽब्जानि संवासयन् ।
काये यस्य विवर्तिमांसरुधिरं गोक्षीरधारासितं,
न्यादोत्सर्गविधिर्न नेत्रविषयस्तस्मै नमोऽस्त्वर्हते ॥ १ ॥

पूज्यः श्रीदानसूरिः स्फटिकविमलहृद्दृश्यदेहप्रकर्षः,
आप्तोक्तेः पारदृश्वा स्वपरसमयविद् मूर्तिमान्पुण्यपुञ्जः ।
दुःसेव्यो नीचसत्त्वैः प्रशमरसमयो जङ्गमः कल्पवृक्षः,
कल्याणं संतनोतु परमगुरुवरः सोऽनिशं सूरिराजः ॥ २ ॥

प्रणम्यैवं जिनाधीशं, गच्छाधिपं यथाक्रमम् ।
पूज्यानां कर्मसिद्धिर्हि, प्रस्ताव्यते यथामति ॥ ३ ॥

सुविदितचरं ह्येतत् सर्वेषां विश्वजन्तूनामाधिव्याध्युपाधिजन्म-जरामरणादिदुःखोत्करवारिपरिपूर्णे, मिथ्यात्वझञ्झावातविह्वलीभूते, भोगिभोगनिभभोगादिविषययादोभिर्व्याकुले, स्वप्नसंनिभसंगमादिभिरापातमात्ररम्ये, क्रोधमानमायादिकषायचित्रभानुना परिताप्यमाने, प्रव्रज्यादिविविधप्रकारकधर्मदायकवाचंयमनाविकवरैः सम्यक्त्व-देशविरतिसर्वविरत्यादियानपात्रैरुत्तार्यमाणभव्यजन्तुजाते अस्मिन्

संसारार्णवे यदि विश्ववैचित्र्यस्य किमपि कारणं वर्तते तदेव कर्मेति । येन केन प्रकारेण तस्यास्तित्वं प्रायः सर्वैर्दर्शनकारैः स्वीकृतमेव । तादृश इह भववारिधौ सुखदुःखसाक्षात्कारकारकस्य पुण्यपापश्रेण्यनुभावकस्य, निःस्वाढ्यविकृतनिरोगिमनिर्बि[1]थथाजातादिदशोपलम्भकस्य तस्य कर्मणो विद्यमानत्वं व्याहन्तुं न केऽपीशाः । केनचित् वासनारूपेण केनचित् शक्तिरूपेण कैश्चित् पश्चान्यतमैकैककारणवादिभिश्च तेन तेन रूपेण तस्यास्तित्वं स्वीकृतमेव ।

प्रथमतोऽयं लघुग्रन्थो दार्शनिकविषयविदनुयोगसूरिभिर्ग्रन्थविधातृभिर्न्यायविशारदन्यायाचार्यमहोपाध्यायश्रीमद्यशोविजयमुनिपुङ्गवानां कर्मप्रकृतेः प्रस्तावनामयो व्यरचि । किन्तु तस्याः कर्मप्रकृतेः प्रकाशयित्री भावनगरस्थश्रीजैनधर्मप्रसारकसभा अस्याः प्रस्तावनायाः प्रमाणबाहुल्यात् तां नाग्रहीत् । अतः सैव प्रस्तावना तैर्विचक्षणविरचयितृवरैः किञ्चिद्विवरणयुक्तेन कर्मसिद्धिनामकपुस्तकरूपेणाधुनार्थिजनेभ्यः प्रसादीक्रियते । यद्यप्यस्य कर्मसिद्धिनामकग्रन्थस्याभिधानमेव तस्य विषयं व्याचष्टे, तथापि तस्य यत्किञ्चिद्विवरणकरणं नायुक्तं प्रतिभाति । अस्मिन् ग्रन्थे विबुधशिरोमणिप्रणेतृभिः प्रथमतः विश्वविचित्रताप्रदर्शनपूर्वककर्मणामस्तित्वरूपेण सिद्धिः, ततः कालवादिनः पूर्वपक्षः, स्वभाववादिनः कालवादिपक्षनिषूदनप्रयुक्तपूर्वपक्षः, स्वभाववादिपरासनसहितो मध्यविवर्तीश्वरोद्यमवादिखण्डनाविरहितश्च नियतिवादिनः पूर्वपक्षः, पश्चान्यतमैकैककारणवादिनां सर्वेषां निर्वापणप्रयुक्तः तेषामेव

---

१ मूर्खः ।

सहकारिकारणत्वेन स्वीकर्तुरदृष्टवादिनः सिद्धान्तपक्षः, पञ्चविंशतितत्त्वसङ्ख्यावतां साङ्ख्यमताभिलाषुकाणां प्रकृतिरूपेण कर्मणो मन्तव्यस्य व्यापादनं, शक्तिरूपेण कर्माभिमतानां निबर्हणं, वासनारूपेण कर्मेष्टबौद्धानां प्रमापणं, कर्मणि वैचित्र्यजात्यनङ्गीकृतां नैयायिकानामपासनं, कर्मणोऽनादित्वस्य सिद्धिरित्यादि कृतं सर्वं विलोकनविबुधवरैः स्वयमेवावसेयं । पुनस्तेषामक्षपादानां समवायस्येश्वरकर्तृत्वस्य च यथास्थानं प्रवासनमपि तैः प्रवचनप्रवीणनिर्मातृभिर्न शेषितम् ।

वर्तमानकाले कर्मसाहित्यप्रधानजैनेन्द्रशासने तद्विबुधवराः सुदुर्लभा एव । अपि तु केचन वर्तन्ते, तथापि तेषां मध्ये सौष्ठवौदार्यविशेषशालिनोऽस्य ग्रन्थस्य स्रष्टारः, पूज्यपादप्रातःस्मरणीयप्रवचनपारदृश्वप्रशमपीयूषपयोनिधिपारगतशासनरत्नत्रयप्रदीपप्रदायकाचार्यवर्यश्रीमद्विजयदानसूरीश्वरसुशिष्यरत्नाः कर्मसाहित्यार्णवकुशलकर्णधारश्रुतसागरपारीणानुयोगस्रगाचार्यश्रीमत्प्रेमविजयगणिपादा एव वरीवर्तन्ते ।

अस्य ग्रन्थस्य परिशोधने प्रसिद्ध्यर्थं च पूज्यपादमुनिगुणगरिष्ठानां मुनिवर्याणां श्रीमन्मङ्गलविजयवराणां सत्प्रयासोऽपेक्षितः । तेषां सदुपदेशेनैव सूर्यपुरनिवासि–श्रेष्ठिवर्य–"मंच्छुभाई जीवनचन्द झवेरी" इत्ययमार्थिकसाहाय्यं दत्तवान् ।

जिनेन्द्रशासननभोनभोमणीनां तेषां सुशिष्यरत्नाभ्यां व्याख्यातृचूडामणिमुनिश्रीमद्रामविजयश्रीमज्जम्बूविजयवराभ्यामप्ययं ग्रन्थो दृग्गोचरीकृतो वर्तते । पुनरन्यकोविदवराणामपि नयनातिथित्वं गतोऽस्त्ययं ग्रन्थः ।

प्रान्तेऽस्यां कर्मसिद्धौ मनुष्यसहजनिष्ठछद्मस्थत्वाद्यनुभावतः मुद्रणस्वभावतो वा संशोधनेनाप्यवशिष्टानां स्खलितानामर्थे सुधीसहृदयसज्जनानामनुग्रहमेवापेक्ष्य इमां प्रस्तावनां समाप्तिं नयामि ।

पूज्यपादानुयोगस्रष्टृश्रीमत्प्रेमविजयगणिवरान्तिषदवतंसविद्वद्वर्यमुनिराजश्रीमज्जम्बूविजयचरणाम्भोजचञ्चरीकायमाणविनेयाणुः

—रक्षितविजयो मुनिः ।





"नमः स्याद्वादवादिने ।"

"परमगुरु–श्रीमद्विजयदानसूरीश्वरेभ्यो नमः ।"



आचार्य्यवर्य्य–श्रीमद्विजयदानसूरीश्वरान्तिषत्–

अनुयोगाचार्यश्रीमत्प्रेमाविजयगणिगुम्फिता–

# कर्म्मसिद्धिः ।



प्रणम्य श्रीमहावीरं, विश्वतत्त्वोपदर्शकम् ।
विश्ववैचित्र्यनिर्वाहा, कर्मसिद्धिः प्रतन्यते ॥ १ ॥

सुविदितं ह्येतत् शेमुषीशालिशेखराणां विबुधवृन्दवर्याणाम्, यदुत दृष्टमात्ररमणीयशब्दादिपञ्चविषयगिरिशिखरकूटविकटीभूतपथे नानाविधधनधान्यादिसमुपार्जनेहारूपमहामरुत्पूर्णक्रोधाद्युग्रकषायचतुष्कपातालकलशाकुले मानसिकसंकल्पविकल्पतरङ्गतरले सरौर्वाग्निविह्वलीभूते घोररोगशोकादिस्वरूपमत्स्यकच्छपाद्यनेकजन्तुजातव्याकुले चराचरेऽस्मिन् संसारनीराकरे केचिदाधिव्याध्युपाधिपरिपीड्यमानाः, केचित्तु प्राज्यराज्यैश्वर्यस्त्रीविलासाद्यनेकविधाल्पकालिकसुखाभाससमुत्कण्ठितचेतसः, अन्ये तु यमनियमपोतारूढा अपि दुर्मतिमत्सरशाठ्यादिविद्युद्दुर्वातगर्जनैः मिथ्यात्वपङ्किलस्खलनाद्युत्पादात् भ्रान्तचेतसो दरीदृश्यन्ते, तन्निबन्धनं कर्मान्तरेण न किमपि पश्यामः ।

तदुक्तं वाचकपुङ्गवैः श्रीमद्यशोविजयगणिभिः—

"येषां भ्रूभङ्गमात्रेण, भज्यन्ते पर्वता अपि ।
तैरहो कर्मवैषम्ये, भूपैर्भिक्षाऽपि नाप्यते ॥१॥"

तथा चोक्तम्—

रमाराज्यभ्रंशः स्वजनविरहः पुत्रमरणम्,
प्रियाणां च त्यागो रिपुबहुलदेशे च गमनम् ।
हरिश्चन्द्रो राजा वहति सलिलं प्रेतसदने,
अवस्था तस्यैषा अहह! विषमाः कर्मगतयः ॥१॥
नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्व-
मान्ध्यं श्रीब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे ।
निर्वाणं नारदेऽपि प्रशमपरिणतिः स्याच्चिलातीसुते वा,
त्रैलोक्याश्चर्यहेतुर्जयति विजयिनी कर्मनिर्माणशक्तिः

अन्यैरपि—

"ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते,
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे १"

बौद्धैरपि—

"इत एकनवतितमे कल्पे, शक्त्या मे पुरुषो हतः ।
तेन कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः! ॥१॥"

इत्यादिनेदं दरीदृश्यमानं विश्ववैचित्र्यं कार्यवैचित्र्यनिर्वाहकविचित्रशक्तियुक्तकर्मकृतमेव स्फुटतया निश्चीयते ।

ननु मनुष्यत्वपशुत्वादिविश्ववैचित्र्यं प्राग्भवीयमनुष्यत्वादिगत्युत्पादकक्रिययैवोपपाद्यतां किमन्तर्गडुना कर्मणेति चेत्?

न, स्वाधिकरणक्षणावच्छेदेनैव फलजनकत्वेन व्यवहितहेतोः फलपर्यन्तव्यापारव्याप्यत्वावधारणादत एव–अन्येषां मतेऽपि "स्वर्गकामो यजेत" इत्यत्रादृष्टद्वारा हेतुत्वकल्पनं संगच्छते,

तथा चोक्तमुदयनाचार्यैः—

'चिरध्वस्तं फलायालं, न कर्मातिशयं विना ।' इति ।

ननूपादानकारणवैचित्र्यात् शरीरवैचित्र्यं शरीरवैचित्र्याञ्च भोगवैचित्र्यं शरीरसंयोगश्चात्मनीति किमदृष्टकल्पनयेति चेत्? न, शरीरसंयोगस्यात्मनीवाकाशादावपि सत्त्वेन तत्रापि भोगापत्तेः, उपष्टम्भकसंयोगेन तस्य भोगनियामकत्वे तूपष्टम्भकसंयोगप्रयोजकतयैवादृष्टसिद्धिः ।

तदुक्तं श्रीमद्भिः हरिभद्रसूरिपादैः शास्त्रवार्तासमुच्चये—

"आत्मत्वेनाविशिष्टस्य, वैचित्र्यं तस्य यद्वशात् ।
नरादिरूपं तच्चित्र–मदृष्टं कर्मसंज्ञितम् ॥१॥" इति ।

अपि चैकजातीयदुग्धपानादौ कथं पुरुषभेदेन सुखदुःखादिभेदः, न च क्वचिद्दुग्धादेः कर्कट्यादिवत् पित्ताद्युद्बोधकत्वेन तद्भेदसिद्धिरिति वक्तव्यम्, सर्वत्र तदापत्तेः । ननु यथा भेषजं कस्यचिद्व्याधिमपनयति, कस्यचिन्न, कस्यचिद्विपरीतमपि जनयति, तद्वदत्रापीति चेत्? न, दुग्धपानादेः तृप्तिमत्त्वेन साक्षात् सुखादितौल्यात्, उत्तरकालं तु धातुवैषम्यात् न तथा एवमेव कर्कट्यादिष्वपि साक्षात् तृप्तिमत्त्वेन सुखादितौल्यं स्यादेव ततः पित्ताद्युद्बोधकधातुवैषम्याभावविशिष्टदुग्धपानत्वादिना सुखादिहेतुत्वकल्पनापेक्षयाऽदृष्टप्रयोज्यजात्यवच्छिन्नं प्रत्येव दुग्धपानादेर्हेतुत्वेन लाघवमिति । नन्वदृष्टम-

न्तरेणाभ्रविकाराणां स्वभावतो विचित्रतोपलभ्यते, तद्वत्सुखादिवैचित्र्यमपि स्वभावतो भविष्यतीति चेत्? न, स्वभावस्यैव निराकरिष्यमाणत्वात्। किञ्च पुद्गलमयत्वे समानेऽपि जीवयुक्तस्वरूपविशेषकारणसद्भावे च प्रत्यक्षेण दृश्यमानस्थूलतनोः किं विचित्रता स्वीक्रियते न वा?, स्वीकारे तद्धेतुकं विचित्रस्वभावमदृष्टं स्वीकरणीयं स्यादेव, अस्वीकारे तु प्रत्यक्षबाधः। अपि च भवान्तरगतस्थूलशरीरनिबन्धनीभूतकार्मणशरीरमन्तरेण परित्यक्तस्थूलशरीरजन्तोरागामिभवशरीरग्रहणाभावः स्यात्, न च निष्कारणः शरीरपरिग्रहो युज्यते, ततश्च परित्यक्ततनोस्तदनन्तरमेव संसारव्यवच्छित्तिः स्यात्। शरीराभावेऽपि भवभ्रमणसम्भवे च मुक्तात्मनामपि संसारापत्तिः, एवं च सति मोक्षेऽनाश्वासः इति। प्रयोगाश्चात्र सहेतुकाः सुखदुःखादयः कार्यत्वात् घटादिवत्। न चेष्टसंयोगादयः सुखस्यानिष्टसंयोगादयो दुःखस्येति वाच्यम्, तुल्येऽपि साधने फलभेददर्शनात्, तस्मात् यदेव तयोरसाधारणं कारणं तदेव कर्मेति।

तदुक्तं श्रीजिनभद्रगणिक्षमाश्रमणपादैः—

"अत्थि सुहदुक्खहेऊ, कज्जओ बीयंकुरस्सेव।
सो दिट्ठो चेव मइ–वभिचाराओ न तं जुत्तं॥ १॥
जो तुल्लसाहणाणं, फले विसेसो न सो विणा हेउं।
कज्जत्तणओ गोयम! घडो व्व हेऊ य से कम्मं॥ २॥"

शास्त्रवार्तासमुच्चयेऽपि–

"तथा तुल्येऽपि चारम्भे, सदुपायेऽपि यो नृणाम्।
फलभेदः स युक्तो न, युक्त्या हेत्वन्तरं विना॥ १॥

तस्मादवश्यमेष्टव्य–मत्र हेत्वन्तरं परैः ।
तदेवादृष्टमित्याहु–रन्ये शास्त्रकृतश्रमाः ॥ २॥" इति ।

एवमाद्यबालशरीरं शरीरपूर्वकमिन्द्रियादिमत्त्वात् युवशरीरवत् । न च पूर्वभवशरीरपूर्वकमित्यारेकणीयम्, तस्यापान्तरालगतावभावात् । न चाशरीरिणो गर्भावस्थायां शरीरपरिग्रहो युक्तः, तन्नियामककारणाभावात् । न च स्वभावस्तन्नियामक इति वक्तुं शक्यते, स्वभावस्य निराकरिष्यमाणत्वात्, तस्माद् यदेव नियामकं तदेव कर्मेति ।

तदुक्तं—

"बालसरीरं देहान्तरपुव्वं इन्दियाइमत्ताओ ।
जह बालदेहपुव्वो, जुवदेहो पुव्वमिह कम्मं ॥१॥" इति ।

तथा दानादिक्रिया फलवती चेतनारब्धत्वात् कृष्यादिक्रियावदित्यनुमानेनाप्यदृष्टसिद्धिः । चेतनाऽनारब्धत्वेन परमाण्वादिक्रियायां नातिप्रसङ्गः । न च चेतनारब्धाऽपि काचित्कृष्यादिक्रिया फलाभाववती भवत्यतोऽनैकान्तिक इति शक्यते प्रलपितुम्, फलोद्देशेनैवारम्भात्, यद्वा दैवादिसामग्रीविकलत्वेन फलाभाववत् मनःशुद्ध्यादिसामग्र्यभावविशिष्टदानादिक्रियाया अपि फलाजनकत्वात् । ननु कृष्यादिक्रियायाः दृष्टधान्यादिफलवत् दानादिक्रियाया अपि मनःप्रसत्त्यादिदृष्टफलमेवास्तु किमदृष्टकल्पनयेति चेत्? तर्हि तस्या अपि क्रियारूपत्वेन फलावश्यंभावात्, ततोऽवश्यमदृष्टरूपं फलमेष्टव्यम् । ननु मनःप्रसत्त्यादिरूपायाः क्रियायाः दानादिक्रियारूपं दृष्टफलमेवास्तु दृष्टमात्रेणैव निर्वाहे सति किमदृष्टकल्पनयेति चेत्? न, मनःप्रसत्त्यादिक्रियां प्रति दानादिक्रियायाः निमि-

च्चकारणत्वात्, नहि भवति यस्य यन्निमित्तकारणं तत्तस्य फलमन्यथा दण्डोऽपि घटफलतामापद्येत। नन्वस्तु दानादिक्रियायाः श्लाघादिकमेव फलं कृष्यादिक्रियातः धान्यादिफलमिव, किमदृष्टकल्पनाप्रयासेन, दृष्टफलासु क्रियासु एव प्रायशो लोकानां प्रवृत्तिदर्शनात्, केषाञ्चिदेवादृष्टफलासु प्रवृत्तिदर्शनाच्चेति चेत्? न, कृष्यादिक्रियातोऽपि दृष्टं धान्यादिकं फलं भवतु मा वा परमशुभारम्भव्याप्यपापरूपं फलं तु भवत्येव। ननु दानादिक्रियायामाशंसितत्वेन भवत्वदृष्टरूपं फलं, परं कृष्यादिक्रियायामनाशंसितत्वेन तत् कथं भवतीति चेत्? नन्वनाभोगतः कुत्रचित्प्रदेशे पतितं वीजं सामग्रीसद्भावे किं फलं न जनयति? तद्वदत्रापि, अन्यथा पशुवधादिकर्तॄणां सर्वेषां मुक्त्यापत्तेः दानादिकर्तॄणां संसारानन्त्यापत्तेश्च। नन्वेवमपि नः का क्षतिरिति चेत्? शृणुत कृषिहिंसाद्यशुभानुष्ठातॄणां सर्वेषां मुक्तिगमने एकोऽपि तदनुष्ठाता तत्फलानुभविता च न प्राप्येत, प्राप्येरँश्च केवलाः शुभक्रियानुष्ठातारः तत्फलानुभवितारश्च, न चैवं दृश्यते, तस्मात् सर्वासामपि क्रियाणां विचित्रत्वात् विचित्रस्वभावं तद्भिन्नमदृष्टरूपं फलं भवतीति द्रष्टव्यम्। तथा स्वपरप्रमेयप्रकाशकैकस्वभावस्यात्मनः हीनगर्भस्थानविग्रहविषयेषु विशिष्टाभिरतिः आत्मतद्व्यतिरिक्तकारणपूर्विका, विशिष्टाभिरतित्वात्, जुगुप्सनीयपरपुरुषे कमनीयकुलकामिन्याः तन्वाद्युपभोगजनितविशिष्टाभिरतिवत्। तथा विग्रहवतां मोहोदयो विग्रहादिव्यतिरिक्तसंसर्गपूर्वको मोहोदयत्वात् मद्यपमोहोदयवत्। एवं संसारिज्ञानमशेषार्थं स्वविषये सावरणं भवति, तत्राप्रवृत्तिमत्त्वात्, यत् ज्ञानं स्वविषयेऽप्रवृत्तिमत् तत्सावरणं। यथा कामलिनः

शब्दविज्ञानमित्याद्यनेके प्रयोगा अदृष्टसिद्धौ स्वयमेवोह्याः । ननु मनुष्यत्वादिपरिणामपरिणतानामेव विचित्रस्वभावताऽस्तु किमदृष्टकल्पनया? कल्पने च तत्कर्तृत्वेनात्मनोऽप्यभ्युपगमप्रसङ्गः इति चेत्? असौ कल्पनावज्रप्रहारो नास्तिकानां शिरस्यस्तु, अस्माभिस्तु तत्कर्तृत्वेन भूतातिरिक्तात्मनः स्वीकृतत्वादिति ।

तदुक्तं—

"भूतानां तत्स्वभावत्वा–दयमित्यप्यनुत्तरम् ।
न भूतात्मक एवात्मे–त्येतदत्र निदर्शितम् ॥१॥" इति ।

तत्तत्क्रियाध्वंसस्य विश्वविचित्रतायाः कारणत्वनिराकरणं तु कल्पलतातोऽवसेयम् ।

---

१ अत्रोच्छृङ्खला नैयायिकाः अस्तु तत्तत्क्रियाध्वंस एव व्यापारः किमपूर्वेण? न चैवं क्रियायाः प्रतिबन्धकत्वव्यवहारापत्तिः, संसर्गाभावत्वादिना कारणीभूताभावप्रतियोगित्वेनैव तद्व्यवहारात् । न चैवं संस्कारोऽप्युच्छिद्येत, अनुभवध्वंसेनैवोपपत्तेः, उद्बोधकानां विशिष्य स्मृतिहेतुत्वेनाऽनतिप्रसङ्गादिति वाच्यम्, इष्टत्वात् । न चैवं प्रायश्चित्तादिकर्म्म(र्मि)णोऽपि फलापत्तिः, प्रायश्चित्ताद्यभाववत्कर्मत्वेन कारणत्वात् । न चैवं दत्तादत्तफलोद्देश्यकप्रायश्चित्ते कृते प्रतियोगिनि तत्प्रायश्चित्तस्य निवेशे दत्तफलादपि फलं न स्यात्, अनिवेशे चादत्तफलादपि फलं स्यादिति वाच्यम्, अदत्तफलनिष्ठोद्देश्यतया तदभावस्य वाच्यत्वात् । एतेन—'प्रायश्चित्तं न नरकादिप्रतिबन्धकम्, आशुविनाशित्वेन तदुत्पत्त्यवारकत्वात् । नापि तद्ध्वंसः, प्रायश्चित्तानन्तरकृतगोवधादितो नरकानुत्पत्त्यापत्तेः । न च तत्तत्प्रायश्चित्तप्राग्वर्त्तिगोवधादिजन्यनरके तत्तत्प्रायश्चित्तध्वंसः तथा, प्राग्जन्मकृतगोवधादितोऽपि नरकानुत्पत्त्यापत्तेः । 'तज्जन्मकृत' इति प्राग्वर्तिगोवधविशेषणे त्वप्रसिद्धिः' इत्यपास्तम् । नचापूर्वास्वीकारेऽङ्गप्रधानव्यवस्थानुपपत्तिः, प्रधानकथंताप्रवृत्तिविधिविधेयत्वादिनाऽङ्गत्वस्य सुवचत्वात्, इत्याहुः । तदसत्, तत्क्रियोद्देशेनान्यप्रायश्चित्ते कृतेऽपि फलानापत्तेः । तत्तत्प्रायश्चित्ताभावनिवेशात् तत्तत्प्रायश्चित्तविशिष्टादत्तफलध्वंसातिरिक्तध्वंसस्य

अपि च भवति प्रवृत्तिः कर्मक्षयार्थित्वेन, न तु दुःखध्वंसार्थित्वेन दुःखध्वंसस्य पुरुषोद्यमं विनापि भावादितोऽप्यदृष्टसिद्धिः। ज्योतिश्चक्रादयोऽप्यदृष्टमपेक्षन्ते, अन्यथा गुरुत्वेन झटिति पातादिप्रसङ्गादिति ।

प्रकटयति चात्र कालवादी स्वकीयं विचारचातुर्यम् । तथाहि—विश्ववैचित्र्यं निखिलं कालकृतमेव, तदेव भावयामः— आम्रपिचुमन्दादयो निखिला अपि वनस्पतयः कालेनैव फलीभवन्ति, न च तमन्तरेण, अन्यथा कथं न फलीभवन्ति ये मधुमासादौ फलप्रदाः ते भाद्रपदादौ, एवं नारकादिनिखिलकार्यजातं भावनीयम् । कालमन्तरेणापि च भवने कार्यजातस्योत्पत्त्यनन्तरमेव लयः स्यात् । स्थितिपरिपाकमन्तरेण च कर्मापि नोदेति । अन्यच्च—कालस्य कर्तृत्वास्वीकारे लघुतरव-

---

व्यापारत्वात् वा नानुपपत्तिरिति चेत् ? । तथापि तत्त्वज्ञानिक्रियया भोगापत्तिः । तद्ध्वंसातिरिक्तत्वमपि निवेशनीयमिति चेत् ? तथापि ध्वंसस्यानन्तत्वेन भोगानन्तत्वापत्तिः । चरमभोगानन्तरं व्यापारसत्त्वेऽपि प्रागभावाभावादेव न फलोत्पत्तिरिति चेत् ? तर्हि प्रायश्चित्तस्थलेऽपि प्रागभावाभावादेव भोगानुत्पत्तिरिति किं तदभावादिनिवेशेन ? । प्रायश्चित्तविधिसामर्थ्ये तु विजातीयप्रायश्चित्तानां विजातीयाऽदृष्टनाशकत्वमेवोचितम् , आगमासंकोचात् , लाघवाच्च । एतेन चरमभोगप्रागभावविशिष्टोक्तध्वंसाधारतासम्बन्धेन क्रियाहेतुत्वमप्यपास्तम् , विशेष्यविशेषणभावे विनिगमनाविरहाच्च । किञ्च तत्क्रियाणां तत्तत्प्रायश्चित्तोद्देश्यत्वमपि तत्तत्क्रियाजन्यकर्मनाशेच्छाविषयतयैव सुष्ठु निर्वहति, नान्यथा, इत्यतोऽप्यदृष्टसिद्धिः । किञ्च प्राग्जन्मकृतानां नानाकर्मणां न योगोद्देश्यत्वमस्ति, नच तत्तत्जन्यफलम् , इति योगरूपप्रायश्चित्तस्यादृष्टनाशकत्वं विना न निर्वाहः । नच योगात् कायव्यूहद्वारा भोग एवेति साम्प्रतम् , नानाविधानन्तशरीराणामेकदाऽसंभवादिति स्पष्टं न्यायालोके । नच योगस्य प्रायश्चित्तत्वस्वीकारे भवतामपसिद्धान्त इति वाच्यम्, "सव्वा वि पव्वज्जा पायच्छित्तं भवंतरकडणं पावाणं कम्माणं ।" इति ।

यस्याः बालाया अपि गर्भोत्पत्तिः स्यात्, न च स्त्रीपुंसंयोगरूपकारणाभावात्तदभावः इति वाच्यम्, केनचित् बालेन सह बालिकायाः तादृक्संयोगस्य दृश्यमानत्वात्, तादृक्संयोगस्य बालक्रीडाप्रयोजकत्वेन न स गर्भोत्पत्तिहेतुक इत्यपि नाशङ्कनीयम्, कस्याश्चिद्युवत्या अपि तादृक्संयोगसत्त्वेऽपि गर्भाधानादर्शनात्, एवमुभयोः तादृशसंयोगसत्त्वेऽपि एकस्या गर्भाधानं नान्यस्याः अतस्तत्रापि काल एव हेतुः । किञ्च पराभिमतस्य स्त्रीपुंसंयोगजन्यगर्भजननस्यापि विलम्बे काल एव हेतुः, न च तज्जन्मनि गर्भपरिणतिरेव हेतुरिति वाच्यम्, क्वचिदपरिणतस्यापि गर्भस्य जन्मश्रवणात् । तथा बालाद्यवस्था, शीतोष्णवर्षाद्युपाधिः, व्यापारवत्त्वेन दण्डस्य सत्त्वेऽपि घटजन्मनि विलम्ब इत्यादयो भावाः कालहेतुका एव, अन्येषामन्यथासिद्धत्वेन न हेतुतेति । किं बहुना मुद्गपक्तिरपि वैजात्यवह्निसंयोगस्थाल्यादिसन्निधानेऽपि कालमन्तरेण न भवितुं प्रभ्वी, तदानीं मुद्गपक्तिजनकवैजात्यसंयोगाभावात्–तदभाव इत्यपि मनस्तरङ्गो न विधेयः, तत्रापि हेत्वन्तरकल्पनस्यावश्यकत्वेन तदपेक्षया कालस्यैव हेतुत्वकल्पनौचित्यात् ।

तदुक्तं—

"न कालव्यतिरेकेण, गर्भबालयुवादिकम् ।
यत्किञ्चिज्जायते लोके, तदसौ कारणं किल ॥ १ ॥
कालः पचति भूतानि, कालः संहरति प्रजाः ।
कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥ २ ॥
किञ्च कालादृते नैव, मुद्गपक्तिरपीक्ष्यते ।
स्थाल्यादिसन्निधानेऽपि, ततः कालादसौ मता ॥३॥

**कालाभावे च गर्भादि, सर्वं स्यादव्यवस्थया।**
**परेष्टहेतुसद्भाव–मात्रादेव तदुद्भवात् ॥ ४ ॥”** इति।

अथैकस्यापि कालस्य सर्वकार्यहेतुत्वे युगपत् सर्वकार्योत्पत्तिः, तत्तत्कार्ये तत्तदुपाधिविशिष्टकालस्य हेतुत्वे उपाधीनामवश्यक्लृप्तत्वेन तेषामेव कार्यविशेषे हेतुत्वमुचितम्, किमजागलस्तनकल्पेन कालेनेति चेत्? अत्र नव्याः क्षणरूपः कालोऽतिरिक्त एव, नच स्वजन्यविभागप्रागभावावच्छिन्नकर्मणः तथात्वमिति वाच्यम्, विभागे तदभावापत्तेः, पूर्वसंयोगावच्छिन्नविभागस्य तथात्वमित्यपि न वक्तव्यम्, अननुगमादिति। तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणवृत्तित्वेन कालस्य हेतुत्वम्, तत्क्षणस्य स्वस्मादभेदेऽपि ‘इदानीं क्षण’ इति प्रतीतिबलात् कालिकाधाराधेयभावस्यावश्यकत्वेन तत्क्षणवृत्तित्वं नासिद्धम्। एतेन क्षणिकत्वमपि नानुपपन्नम्, तत्तत्क्षणतन्नाशानां तत्तत्पूर्वक्षणजन्यत्वात्, तथा च क्षणक्षयिणा क्षणेनैव कार्योत्पत्तौ किमतिरिक्तहेतुकल्पनयेति। न चैकस्मिन्नेव क्षणे कपाले घटादिकं तन्तौ पटादिकं कार्यमिति देशनियमार्थमतिरिक्तहेतुसिद्धिरिति वाच्यम्, काचित्कस्य नित्य इवानित्येऽपि स्वभावतः सम्भवात् काचित्कस्यैव हेतुनियम्यत्वेन तदापत्त्यभावात्, अथ क्षणस्येवान्येषामपि नियतपूर्ववर्तित्वेन कथं हेतुत्वप्रतिक्षेपः क्रियत इति चेत्? न, अवश्यक्लृप्तनियतपूर्ववर्तिनः एव कार्यसम्भवे तद्व्यतिरिक्तानामनन्तनियतपूर्ववर्तिनामन्यथासिद्धत्वकल्पनेन लाघवादित्याहुः तस्मात् विश्वविचित्रता निखिलापि कालकृतेति ध्येयम्।

अत्राह स्वभाववादी कालवादिनं प्रति, भो कालवादिन्! विश्ववैचित्र्यं कालकृतं त्वयोक्तं तदसद्युक्तिमुद्गरेण घट इव नंक्ष्यति, तथा हि-आम्रराजादनीपिचुमन्दादयो निखिला अपि वनस्पतयः स्वभावत एव मधुमासादौ फलप्रदा भवन्ति, न कालविलम्बात्, यत्त्वयोक्तं-"अन्यथा कथं न फलीभवन्ति ये मधुमासादौ फलप्रदाः ते भाद्रपदादौ" तदपि न रमणीयम्, भाद्रपदादौ तादृक् स्वभावाभावात्, अन्यथा पिचुमन्दे आम्रफलमाम्रे पिचुमन्दफलं, हिंसाद्यशुभक्रियातः स्वर्गादिकं, सुपात्रदानादिक्रियातः नरकादिकं, मृदः पटादिकं, तन्त्वादितः घटादिकं, सिकतातः तैलं रज्जुश्च, जलात् नवनीतं, करतले रोमराजयः, महिलायाः श्मश्रु, वन्ध्यायाः पुत्रोत्पत्तिः, पुरुषस्य गर्भाधानं, शर्कराद्राक्षेक्षुरसगुडगोक्षीरादिमधुरपदार्थेषु कटुत्वं, घोषातकीप्रमुखकटुकपदार्थसार्थेषु माधुर्यं, गोक्षीरकुन्देन्दुतुषाररजतबलाकादिवस्तुजातेषु श्यामत्वं, मयूरपिच्छादौ चित्ररूपाभावः, सर्पे निर्विषत्वं, पर्वते चलत्वं, वायौ स्थिरत्वं, मत्स्यतुम्बयोर्भूमौ तरणं, दृकस्य जले तरणं, पक्षिगणस्य गगने गमनाभावः, वह्नौ तिर्यग्गमनं शीतत्वं च, नागरे कफजनकत्वं, गुडे पित्तजनकत्वं, हरीतक्यां विरेचनाभावः, रवितापे शीतत्वं, चन्द्रे चोष्णत्वमित्येवंरूपेण वैपरीत्येनापि कार्यजातं कदाचिदुपलभ्येत कालस्य समानत्वात्, न च तथोपलभ्यते, किन्तु मृदो घटः, तन्तुभ्यः पटः, शर्करायां माधुर्यमित्यादिप्रतिनियतरूपेणेति। एवं बदर्याः कण्टकः तीक्ष्णः वक्रश्चैकः सरलोऽन्यः, वर्त्तुलं फलं तथा कुत्रचित् शिलाखण्डे प्रतिमारूपं विद्यते तच्च कुङ्कुमागरुचन्दनविलेपाद्यनुभवति, धूपाद्यामोदं

च्चान्यस्मिंश्च पाषाणखण्डे पादक्षालनमित्यादि, तस्मात् सर्वं स्वभावजमेवेति भाव्यम् ।

तथा चोक्तं—

"न स्वभावव्यतिरेकेण, गर्भबालयुवादिकम् ।
यत्किञ्चिज्जायते लोके, तदसौ कारणं किल ॥ १ ॥
सर्वे भावाः स्वभावेन, स्वस्वभावे तथा तथा ।
वर्तन्तेऽथ निवर्तन्ते, कामचारपराङ्मुखाः ॥ २ ॥
न विनेह स्वभावेन, मुद्गपक्तिरपीष्यते ।
तथा कालादिभावेऽपि, नाश्वमाषस्य सा यतः ॥ ३ ॥
अतत्स्वभावात् तद्भावे–ऽतिप्रसङ्गोऽनिवारितः ।
तुल्ये तत्र मृदः कुम्भो, न पटादीत्ययुक्तिमत् ॥ ४ ॥
कः कण्टकानां प्रकरोति तैक्ष्ण्यं,
विचित्रभावं मृगपक्षिणां च ।
स्वभावतः सर्वमिदं प्रवृत्तं,
न कामचारोऽस्ति कुतः प्रवृत्तिः ॥ ५ ॥
कण्टकस्य च तीक्ष्णत्वं, मयूरस्य विचित्रता ।
वर्णाश्च ताम्रचूडानां, स्वभावेन भवन्ति हि ॥ ६ ॥
बदर्याः कण्टकस्तीक्ष्णः, ऋजुरेकश्च कुञ्चितः ।
फलं च वर्तुलं तस्य, वद केन विनिर्मितम् ? ॥ ७ ॥" इति ।

अन्यत्तु कार्यजातं दूरे तिष्ठतु, मुद्गपक्तिरपि न स्वभावमृते भवितुं प्रभुः, तथाहि–प्रतिनियतकालव्यापारादिसामग्रीसन्निधानेऽपि नाश्वमाषपक्तिरुपलभ्यते, तस्माद्यद्भावे भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति । न शक्यते वक्तुमश्वमाषपक्तिः वैजात्याग्निसंयोगाभावादिति, एकयैव क्रियया तत्त-

दन्याग्निसंयोगात्, अन्यथाऽश्वमाषभिन्नमुद्गानामप्यपाकापत्तेः। न चादृष्टाभावादश्वमाषाऽपक्तिः, दृष्टसाद्गुण्ये तद्वैषम्यायोगात्, अन्यथा दृढदण्डप्रेरितमपि चक्रं न भ्राम्येत्, तस्मात् स्वभाववैषम्यादश्वमाषापक्तिरिति सुदृढतरमवसेयमिति ।

ननु सामग्र्येव कार्यजनिकाऽस्तु किं स्वभावेन, अश्वमाषादौ स्वरूपयोग्यताभावात् तदपाक इति चेत्? न, अन्तरङ्गकारणेनैव कार्योत्पत्तौ तद्भिन्नस्यान्यथासिद्धत्वात् । ननु स्वभाव एवान्तरङ्गकारणं न सामग्रीति कथं निर्णयः इति चेत्? स्वस्य भावः कार्यजननपरिणतिः इति स्वभावस्य व्युत्पत्त्यर्थत्वात्, स्वभावपरिणतेः कार्यैकव्यङ्ग्यत्वेन मृत्स्वभावाविशेषेऽपि न घटादिकार्यविशेषाभावप्रसङ्गः, अन्यथाङ्कुरजननस्वभावं कुशूलस्थं बीजमप्यङ्कुरं जनयेत्, अथ सहकारिसमवधाने स्वभावस्य कार्यजनकत्वेन कुशूलस्थं बीजं कथं कार्यं जनयेदिति चेत्? न, सहकारिचक्रानन्तर्भावेन तस्य वैजात्यबीजत्वेनाङ्कुरहेतुत्वौचित्यात् । ननु सहकारिचक्रस्यातिशयाधायकत्वं त्वयापि स्वीकृतमतस्तस्यैवाङ्कुरजनकत्वमप्युचितमिति चेत्? न, पूर्वपूर्वोपादानपरिणामानामेवोत्तरोत्तरोपादेयपरिणामहेतुत्वात् । एतेन— "चरमक्षणपरिणामरूपबीजस्यापि द्वितीयादिक्षणपरिणामरूपाङ्कुराजनकत्वात्, व्यक्तिविशेषमवलम्ब्यैव हेतुहेतुमद्भावो वाच्यः, अन्यथा व्यावृत्तिविशेषानुगतप्रथमादिचरमपर्यन्ताङ्कुरक्षणान् प्रति व्यावृत्तिविशेषानुगतानां चरमबीजक्षणादिक्षोपान्त्याङ्कुरक्षणानां हेतुत्वे कार्यकारणतावच्छेदककोटावनेकक्षणप्रवेशाप्रवेशाभ्यां विनिगमनाविरहात् । तथा च तज्जातीयात्

कार्यात् तज्जातीयकारणानुमानभङ्गप्रसङ्गः" इत्यपि कालवादो निरस्तः। सादृश्यतिरोहितवैसादृश्येनाङ्कुरादिना तादृशबीजादीनामनुमानसंभवात्, प्रयोज्यप्रयोजकभावस्यैव विपक्षबाधकतर्कस्य जागरूकत्वात्, इत्यादिकं विवेचितमध्यात्ममतपरीक्षायां न्यायाचार्यैः, तत एवावलोकनीयं विस्तारार्थिनेति। तस्मात् विश्ववैचित्र्यं न कालकृतं किन्तु स्वभावकृतमवगन्तव्यमिति।

अत्र नियतिवादिनः स्वकीयं युक्तिकदम्बकं प्रकटयन्ति। तथा हि—जगति ये केचन भावा भवन्ति ते नियतिजा एव, 'कथं न सफलीभवन्ति ये मधुमासादौ फलप्रदास्ते भाद्रपदादौ' इत्यत्र स्वभावतया कालवादिनं प्रत्युत्तरितं तत्तव न शोभां बिभर्ति, यतः—स्वभावस्य सत्त्वेऽपि मधुमासादावेव केचिदाम्रा अतिफलभारेण नम्रीभूता भवन्ति, केचित्तु वन्ध्याः, केचित्स्वल्पफलाः, किं बहुना? एकस्यैवाम्रस्य मञ्जर्या व्याप्तस्यापि न तादृशान्याम्रफलानि भवन्ति, यानि च भवन्ति तत्रापि बहूनि त्वपक्वान्येव भूमौ निपतन्ति, स्तोकानि च परिपक्वफलानि भवन्त्यतो नियतिं विमुच्य नान्यत् किमपि बीजं विश्ववैचित्र्ये पश्यामः। अथ स्वरूपयोग्यताभाव एव बीजमिति चेत्? न, स्वरूपयोग्यतायाः वस्तुस्वरूपत्वे उक्तदोषतादवस्थ्यात्, तद्भिन्नत्वे नियतेरेव नामान्तरेणाभिधानात्। किञ्च मधुमासे आम्रवृक्षशाखायां कोकिलो रवं कुर्वन् तिष्ठति, तस्मिन्नवसरेऽधस्तस्य वधार्थं कश्चित् व्याधो धनुषीषुं समारोप्य तिष्ठति, उपरि च तद्वधार्थं सिञ्चानकः समयमवलोकयति, तस्मिंश्चावसरे व्याधोऽहिना दष्टः सन् भूमौ निपतितः तस्मि-

न्नेव काले करान्मुक्तः शरोऽपि गत्वा सिञ्चानकं विव्याध, कोकिलः निर्भीको भूत्वोड्डयित इति । अत्र कोकिलरक्षणे नियतिं विना को हेतुरन्यः, एवं ब्रह्मदत्तस्यान्धत्वादावपि बोध्यम् ।

तदुक्तम्—

"नियतेनैव रूपेण सर्वे, भावा भवन्ति यत् ।
ततो नियतिजा ह्येते, तत्स्वरूपानुवेधतः ॥ १ ॥
यद्यदैव यतो यावत्, तत्तदैव ततस्तथा ।
नियतिं जायते न्यायात्, क एतां बाधितुं क्षमः?२" इति।

अनुमानं चेत्थं—सर्वे भावाः नैयत्यनियामकतत्त्वान्तरोद्भवाः, सजातीयविजातीयव्यावृत्तस्वभावानुगतरूपेणैव प्रादुर्भावात्, नियतिकृतप्रतिनियतधर्मोपश्लेशाद्वा, यथा तीक्ष्णशस्त्राद्युपहतानामपि मरणनियतभावेन मरणं जीवननियतभावेन जीवनमिति । न चाप्रयोजकः, यद्यस्मिन्काले यन्निमित्तात् यावद्देशव्यापि जायमानं कार्यं दृश्यते, तत्तस्मिन् काले तन्निमित्तात् तावद्देशव्यापि भवतीत्यनुकूलतर्कस्य विद्यमानत्वेन नियतरूपावच्छिन्नं प्रति नियतेरेव हेतुत्वात्, अन्यथा नियतरूपस्याकस्मिकत्वापत्तेः, न च तावद्धर्मत्वं न जन्यतावच्छेदकं किन्त्वर्थसमाजसिद्धमिति वाच्यं, नियतिजन्यत्वेनैवोपपत्तावर्थसमाजाकल्पनात्, भिन्नसामग्रीजन्यत्वे चैकवस्तुरूपव्याघातप्रसक्तेश्चेति । एवं मुद्गपक्तिरपि स्वजनकस्वभावव्यापारादिसत्त्वेऽपि नियतरूपैव, नानियतरूपेत्यत्र नियतिमन्तरेण नान्यत् किमपि कारणं पश्यामः । अथ स्वभावप्रयोज्यं नैयत्यमिति चेत्? न, स्वभावस्य कार्यैकजात्यप्रयोजकत्वात्, सातिशयस्वभावस्यापि

कार्यविशेष एव प्रयोजकत्वात्, पक्त्यन्तरसाजात्यवैजात्योभयसम्बन्धस्य नियतिमन्तरेणासंभवात्। ननु हेतुना व्यक्तिरेव जन्यते, उभयसंसर्गस्तु समवायरूपतत्त्वान्तरसंसर्गादिति चेत्? न, समवायाभावात्। तथा हि—

ननु समवायः समवायिनो भिन्नोऽभिन्नो वा? अभिन्नश्चेत्? नित्योऽनित्यो वा?, नित्योऽप्येकोऽनेको वा?। अभिन्नो नित्य एकश्चेत्? अनित्यसमवायिनो नित्यतापत्तिरेकत्वापत्तिश्च। अभिन्नो नित्योऽनेकश्चेत्? अनित्यसमवायिनो नित्यतापत्तिर्दुर्निवारैव। अभिन्नोऽनित्य एकश्चेत्? नित्यानामपि परमाण्वादीनामनित्यतापत्तिरेकत्वापत्तिश्च। अभिन्नोऽनित्योऽनेकश्चेत्? नित्यानामनित्यतापत्तिस्सुदुर्निवारा। एतेषु चतुर्ष्वपि स्वसिद्धान्तव्याकोपश्च। एवं भिन्नोऽनित्यः एको भिन्नोऽनित्योऽनेक इति पक्षद्वयेऽपि स्वसिद्धान्तव्याकोपो वाच्यः। भिन्नो नित्य एकश्चेत्? गुणगुणिनोः जातिव्यक्त्योः क्रियाक्रियावत्तोरयुतसिद्धयोः सम्बन्धनियामकत्वेनातिरिक्तसमवायकल्पनमिव समवायस्यापि तत्त्वान्तरत्वेन तस्यापि सम्बन्धनियामकत्वेनातिरिक्ततत्त्वान्तरकल्पनापत्तिः। न च समवायः स्वरूपेणैव तत्र सम्बद्ध इति वाच्यम्, अयुतसिद्धयोरपि स्वरूपेणैव सम्बद्धत्वस्वीकारेणैव निर्वाहे सत्यतिरिक्तकल्पनायां मानाभावात्, वायौ रूपवत्ताबुद्धिप्रसङ्गश्च। भिन्नो नित्योऽनेकश्चेत्? अनन्तसमवायापेक्षया लाघवेन स्वरूपसम्बन्धकल्पनमेव न्याय्यम्। समवायसत्त्वेऽपि तत्सम्बन्धनियामकतत्त्वान्तरगवेषणप्रसङ्गाच्च। अपि च दण्डादिसामग्रीसत्त्वेऽवश्यं घटो भविष्यतीति न

सम्यङ्निर्णयः, अपि तु सम्भावनैव सामग्रीसत्त्वेऽपि कदाचित् घटानुत्पत्तेरिति न दृष्टहेतुसिद्धिः । अथ नियत्यनिश्चयेन कार्यजन्मनः पूर्वं प्रवृत्तिरेव न स्यादिति चेत्? न, अविद्ययैव तत्र प्रवृत्तेः, फलप्राप्तेः यादृच्छिकत्वादिति । अपि च नालिकेरपादमूलेन पीतं कं कथं तत् फले प्राप्यते?, गजभुक्तं च कपित्थं निर्गर्भमभग्नमेव कथं निर्गच्छति?, तस्मात् यद् भावि तद्भवत्येवेति निश्चयः ।

तथा चोक्तं—

"यद्भाव्यं तद्भवत्येव, नालिकेरफलाम्बुवत् ।
गन्तव्यं गमयत्येव, गजभुक्तकपित्थवत् ॥ १ ॥
न चर्ते नियतिं लोके, मुद्गपक्तिरपीक्ष्यते ।
तत्स्वभावादिभावेऽपि, नासावनियता यतः ।२।" इति ।

किं बहुना? सुखादिकं सुखसाधनं वा सर्वं नियतिकृतं न पुरुषकारादिना, तथा हि—यदि पुरुषकारकृतं सुखाद्यनुभूयेत तर्हि समानेऽपि पुरुषकारे कर्षकादीनां फलवैसादृश्यं केषाञ्चित् फलाभावश्च न स्यात्, केषाञ्चित् पुरुषकाराभावेऽपि विपुलधनधान्यादिप्राप्तिश्च दृश्यते, ततः सर्वं नियतिकृतमेव । नापि कालकृतं तस्यैकरूपत्वेन विश्ववैचित्र्यानुपपत्तितः निराकृतत्वात् । नापीश्वरकृतम्, तादृगीश्वराभावात् ।

नन्वनुमानात् तादृगीश्वरसिद्धिः, तथाहि—क्षित्यङ्कुरादिकं कृतिजन्यं कार्यत्वात् घटवत्, न च शरीराजन्यत्वेन सत्प्रतिपक्षितोऽयं कार्यत्वरूपो हेतुरिति वाच्यम्, अप्रयोजकत्वात् । न चास्तु कार्यत्वं मास्तु कृतिजन्यत्वमित्याशङ्कनीयम्, कार्यत्वस्य कृतिजन्यत्वव्याप्यत्वादिति चेत्? न, विद्युदादौ व्यभि-

चारात्, न च विद्युदादीनां पक्षतावच्छेदकाक्रान्तत्वेन तत्र साध्यमेवेति वक्तव्यम्, तथा सति घटादीनामपि पक्षान्तर्वर्त्तित्वेन दृष्टान्तोपादानासंभवात्, अतो विद्युदादेः सपक्षकक्षाप्रवेशेन तद्वृत्तित्वस्याप्यभावादसाधारणानैकान्तिकत्वस्य युक्तिशतेनापि दूरीकर्तुमशक्यत्वात्। न च कुलालकृतिजन्यत्वस्य घटादौ विद्यमानत्वेन नासाधारण्यमित्याशङ्कनीयम्, तादृशकृतेस्तु साध्यतावच्छेदकानाक्रान्तत्वात्। किञ्चावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽप्यन्ततः क्षितित्वस्य व्यर्थत्वात् जन्यत्वस्यैव पक्षतावच्छेदकत्वं स्वीकरणीयं स्यात्, तथा च पक्षतावच्छेदकहेतोरैक्यप्रसङ्गः। नन्वैक्येऽपि का क्षतिरिति चेत्? न, उद्देश्यतावच्छेदकविधेययोरैक्येनोपनयवाक्यात् शाब्दबोधानुपपत्तेः। न च स्वरूपसम्बन्धविशेषरूपकार्यत्वस्यैव पक्षतावच्छेदकत्वेन प्रागभावप्रतियोगित्वस्य च हेतुत्वान्न तयोरैक्यमित्यारेकणीयम्, स्वरूपसम्बन्धरूपकार्यताव्यक्तीनां तत्तद्व्यक्तिमात्रपर्यवसितत्वेनानुगतपक्षतावच्छेदकालाभात्, न-चान्यतमत्वेनानुगतव्यक्तीनां पक्षतावच्छेदकत्वमित्याशङ्कनीयम्, अन्यतमत्वघटितत्वेन गौरवात्। एवं प्रागभावप्रतियोगित्वस्यापि स्वरूपसम्बन्धविशेषरूपत्वेन तत्तद्धर्म्मिव्यक्तिरूपत्वात् पक्षतावच्छेदकहेत्वोरैक्यापरिहारः। न च स्वरूपसम्बन्धादतिरिक्तं प्रतियोगित्वमिति वक्तव्यम्, सप्तैव पदार्था इति वाक्येन विरोधापत्तेः। किञ्च स्वरूपसम्बन्धरूपकार्यत्वस्य पक्षतावच्छेदकत्वे तादृशकार्यत्वस्य परमाण्वादिष्वपि विद्यमानत्वेन परमाण्वादीनामनित्यत्वापत्तिः। ननु ययोर्विशेषकार्यकारणभावः तयोरवश्यं सामान्येन कार्यकारणभाव इति

नियम इति चेत्? तादृशनियमे प्रमाणाभावादिति । अपि च भवदभिमतो भगवान् स्वार्थात् कारुण्याद्वा भुवनं घटयति? न प्राच्यः, कृतकृत्यत्वात्तस्य, द्वितीयश्चेत्? कथं नैकान्तशर्मसम्पत्कमनीयं विनिर्मिमीते, कथं चाधिव्याधिघटितान्घटयति । भवान्तरोपार्जितशुभाशुभादृष्टप्रेरितः सन् तथा घटयतीति चेत्? तर्ह्यन्तर्गडुना भवानीपतिना किं कृतम्, "घटकुट्यां प्रभातम्" इति न्यायेन स्वीकृतं चायुष्मता भवताऽस्मन्मतम्, किञ्चासौ जानन्नजानन् वा घटयति? नान्त्यः, सर्वज्ञत्वव्याहतिप्रसङ्गात् । आद्यश्चेत्? विश्वोपद्रवकारिणः पश्चादपि कर्तव्यनिग्रहान् सुरवैरिण एतत्प्रतिक्षेपकारिणश्चास्मदादीन् किमर्थं रचयति?, अपि चासौ मूर्तोऽमूर्तो वा?, मूर्तश्चेत्? अस्मदादिवन्न कर्तृत्वं युज्यते, अमूर्तश्चेत्? आकाशादिवन्निष्क्रियत्वेन सुतरामकर्तृत्वम् । एवं सरागपक्षेऽपि कर्तृत्वमस्मदादिवन्न युज्यते, वीतरागपक्षे तु विश्ववैचित्र्यं कथं घटयति, वीतरागत्वादेवेत्यलमतिपल्लवितेन ।

नाप्यदृष्टस्य सुखदुःखादिकर्तृत्वं घटते, तथा हि—पुरुषाद् भिन्नमभिन्नं वादृष्टम्, अभिन्नं चेत्? पुरुषमात्रतापत्तिः, भिन्नं चेत्? सचेतनमचेतनं वा? सचेतनं चेत्? एकस्मिन् शरीरे चेतनद्वयापत्तिः, अचेतनमिति चेत्? न, अस्वतन्त्रस्य सुखदुःखं प्रति कर्तृत्वाभावादिति ।

तथा चोक्तम्—

"प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः,
सोऽवश्यं भवति नृणां शुभोऽशुभो वा ।

भूतानां महति कृतेऽपि हि प्रयत्ने,
नाभाव्यं भवति न भाविनोऽस्ति नाशः॥१॥" इति।

सूत्रकृताङ्गेऽपि—

"न तं सयं कडं दुक्खं कओ अन्नकडं च णं।
सुहं वा जइ वा दुक्खं सेहियं वा असेहियं ॥ १ ॥
सयं कडं न अण्णेहिं वेदयन्ति पुढो जीया।
संगइअं तं तहा तेसिं इहमेगेसि आहिअं ॥ २ ॥"

वृत्तिः—यत्तैः प्राणिभिरनुभूयते सुखं दुःखं स्थानविलोपनं वा न तत् 'स्वयं' आत्मना पुरुषकारेण 'कृतं' निष्पादितं दुःखमिति कारणे कार्योपचारात् दुःखकारणमेवोक्तम्, अस्य चोपलक्षणत्वात् सुखाद्यपि ग्राह्यम्, ततश्चेदमुक्तं भवति—योऽयं सुखदुःखानुभवः स पुरुषकारकृतकारणजन्यो न भवतीति, तथा कुतः 'अन्येन' कालेश्वरस्वभावकर्मादिना च कृतं भवेत्? 'ण' मित्यलङ्कारे, तथा हि—यदि पुरुषकारकृतं सुखाद्यनुभूयेत ततः सेवकवणिक्कर्षकादीनां समाने पुरुषकारे सति फलप्राप्ति-वैसादृश्यं फलाप्राप्तिश्च न भवेत्, कस्यचित्तु सेवादिव्यापारा-भावेऽपि विशिष्टफलावाप्तिर्दृश्यत इत्यतो न पुरुषकारात्किञ्चि-दासाद्यते, किं तर्हि नियतेरेवेति, एतच्च द्वितीयश्लोकान्तेऽभि-धास्यते, नापि कालः कर्ता, तस्यैकरूपत्वाज्जगति फलवैचित्र्या-नुपपत्तेः कारणभेदे हि कार्यभेदो भवति, नाभेदे, तथाहि—अयमेव हि भेदो भेदहेतुर्वा घटते यदुत विरुद्धधर्माध्यासः कारणभेदश्च। तथेश्वरकर्तृके अपि सुखदुःखे न भवतः यतोऽसावीश्वरो मूर्तोऽमूर्तो वा?, यदि मूर्तस्ततः प्राकृतपुरुषस्येव सर्वकर्तृत्वाभावः, अथामूर्तः तथासत्याकाशस्येव सुतरां

निष्क्रियत्वम्, अपि च—यद्यसौ रागमांस्ततोऽसदाद्यव्यतिरेकाद्विश्वस्याकर्तैव, अथासौ वीतरागस्ततस्तत्कृतं सुभगदुर्भगेश्वरदरिद्रादिजगद्वैचित्र्यं न घटां प्राञ्चति, ततो नेश्वरकृते इति । तथा स्वभावस्यापि सुखदुःखादिकर्तृत्वानुपपत्तिः, यतोऽसौ स्वभावः पुरुषात् भिन्नोऽभिन्नो वा ?, यदि भिन्नो न पुरुषाश्रिते सुखदुःखे कर्तुमलम्, तस्माद्भिन्नत्वादिति, नाप्यभिन्नः, अभेदे पुरुष एव स्यात्, तस्य चाकर्तृत्वमुक्तमेव, नापि कर्मणः सुखदुःखं प्रति कर्तृत्वं घटते, यतस्तत्कर्म पुरुषाद्भिन्नमभिन्नं वा भवेत् ?, अभिन्नं चेत् पुरुषमात्रतापत्तिः कर्मणः, तत्र चोक्तो दोषः, अथ भिन्नं ? तत्किं सचेतनमचेतनं वा ?, यदि सचेतनमेकस्मिन्कार्ये चैतन्यद्वयापत्तिः, अथाचेतनं तथा सति कुतस्तस्य पाषाणखण्डस्येवास्वतन्त्रस्य सुखदुःखोत्पादं प्रति कर्तृत्वमिति, एतच्चोत्तरत्र न्यासेन प्रतिपादयिष्यत इत्यलं प्रसङ्गेन । तदेव सुखं "सैद्धिकं" सिद्धौ—अपवर्गलक्षणायां भवं यदि वा दुःखमसातोदयलक्षणमसैद्धिकम्, सांसारिकं यदि वा उभयमप्येतत्सुखं दुःखं वा स्रक्चन्दनाद्युपभोगक्रियासिद्धौ भवं तथा कशताडनादिसिद्धौ भवं सैद्धिकं, तथा—'असैद्धिकं' सुखमान्तरमानन्दरूपमाकस्मिकमनवधारितबाह्यनिमित्तमेवं दुःखमपि ज्वरशिरोऽर्तिशूलादिरूपमङ्गोत्थमसैद्धिकमेतदुभयमपि न स्वयं पुरुषकारेण कृतम्, नाप्यन्येन केनचित्कालादिना कृतम्, 'वेदयन्ति' अनुभवन्ति, 'पृथक् जीवाः' प्राणिन इति कथं तर्हि तत्तेषामभूत् ? इति नियतिवादी स्वाभिप्रायमाविष्करोति—'संगइयं'ति सम्यक्स्वपरिणामेन गतिर्यस्य यदा यत्र यत्सुखदुःखानुभवनं सा संगतिः—नियतिस्तस्यां भवं सांगतिकम्, यतश्चैवं

न पुरुषकारादिकृतं सुखदुःखादि, अतस्तत्तेषां प्राणिनां नियतिकृतं सांगतिकमित्युच्यते, 'इह' अस्मिन् सुखदुःखानुभवादेकेषां वादिनां 'आख्यातं' तेषामयमभ्युपगमः।" इति।

एतत्सर्वं बालजल्पितम्, अदृष्टस्य विश्ववैचित्र्यस्य हेतुत्वेन साधितत्वात्, पुनरपि किञ्चिदुच्यते, भोक्तृव्यतिरेकेण भोग्यं विश्वे न विद्यते, भोग्यपदस्य ससम्बन्धित्वात्, नाकृतस्य भोक्तापि स्वव्यापारजन्यस्यैव स्वभोग्यत्वदर्शनात्, अन्यथा मुक्तात्मनां भोगप्रसङ्गात्, भोग्यं च सत्त्वानां सुखदुःखादिप्रकारेण विश्वं प्रत्यक्षतया दृश्यते, इतोऽपि कर्मकर्तृत्वेन विश्ववैचित्र्यं निर्णीयते। न भवितुमर्हति भोक्तृगतानुकूलादृष्टाभावे मुद्गपक्तिरपि, कुत्रचित्स्थाल्यादिभङ्गोपलम्भात्। न च दृष्टकारणवैगुण्यात्तत्र पाकाभाव इत्यपि नोद्यम्, वैगुण्येऽपि निमित्तान्तरस्यावश्यकत्वात्, अतः दृष्टकारणानां नियमतो नापेक्षापि, तथाविधप्रयत्नमन्तरेणापि पुण्योदयेन धनधान्यादिप्राप्तिदर्शनात्, केवलं कर्मविपाककालेऽवर्जनीयसन्निधिकत्वेन दृष्टकारणानां निमित्तत्वव्यवहारात्, अत एव 'दृष्टकारणानामदृष्टव्यञ्जकत्वम्' इति सिद्धान्तः सङ्गच्छते।

तथा चोक्तम्—

"न भोक्तृव्यतिरेकेण, भोग्यं जगति विद्यते।
नचाकृतस्य भोक्ता स्यात्, मुक्तानां भोग्यभावतः॥१॥
भोग्यं विश्वं च सत्त्वानां, विधिना तेन तेन यत्।
दृश्यतेऽध्यक्षमेवेदं, तस्मात्तत्कर्मजं हि तत्॥ २॥
न च तत्कर्मवैधुर्ये, मुद्गपक्तिरपीक्ष्यते।
स्थाल्यादिभङ्गभावेन, यत् कचिन्नोपपद्यते॥ ३॥"

"यथा यथा पूर्वकृतस्य कर्मणः,
फलं निधानस्थमिवावतिष्ठते ।
तथा तथा तत्प्रतिपादनोद्यता,
प्रदीपहस्तेव मतिः प्रवर्त्तते ॥ १ ॥"

विपाककालस्य कर्मावस्थाविशेषरूपत्वेन न कालवादप्रसक्तिः, कर्मसन्तानस्यानादित्वेन न कर्मकारणापेक्षा वैयर्थ्यम्, विभिन्नविभिन्नकार्यजनकविचित्रशक्तियोगात् भोग्यमपि विचित्रम्, कर्मवैचित्र्यानभ्युपगमे चित्रभोगस्याप्यनुपपत्तेः । नैयायिकादिभिरपि क्वचिदुद्भूतरूपमेव क्वचिच्चानुद्भूतरूपमेव, परमाणुसाद्भूतानां च शल्यादिबीजानां शाल्यङ्कुरजनकत्वमेवेति नियमेऽदृष्टस्यैवाङ्गीकृतत्वेन सर्वत्र तद्धेतुत्वस्यौचित्यात् तस्मान्न नियत्यादिकं विश्ववैचित्र्यजनकम् ।

यदुक्तं—

"चित्रभोग्यं तथा चित्रात्कर्मणोऽहेतुतान्यथा ।
तस्य यस्माद्विचित्रत्वं,नियत्यादेर्न युज्यते ॥१॥" इति ।

किञ्च भो नियतिवादिन्! तवाभिमता नियतिः नियतरूपा अनियतरूपा वा?, नियतरूपा चेत्? नियतिजन्यत्वेनाभिमतानां कार्याणां समानता स्यात्, नियतेरेकरूपत्वेनाभ्युपगमात्, न कारणभेदमन्तरेण कार्यभेदो भवतीति । अनियतरूपा चेत्? "घटो यदि पटजनकान्यूनानतिरिक्तकारणजन्यः स्यात्तदा पटः एव स्यात्, घटजनकं यदि पटं न जनयेत् तर्हि पटजनकात् भिद्येत" इति न्यायात् नियतेः विचित्रताभ्युपगमनीया स्यात्, न चेष्टापत्तिः कर्तुं शक्यते, जलत्वेन समानस्यापि जलस्याकाशपतनानन्तरमूषरेतरभूसम्बन्धमन्तरेण यथा न

भवति भेदः, तद्वत्प्रतिनियतकार्यजनकनियतेरप्यन्यभेदकमन्तरेण विचित्रतायाः अघटमानत्वात्, मन्यस्व तर्हि तद्भेदकोऽप्यन्यः, नः का क्षतिरिति चेत्? कर्तृत्वं विहाय नान्या कापि, तथा च नियतेः कर्तृत्वसिद्धान्तो व्याहन्यते। तद्भेदकस्यापि कर्तृत्वमनुपपन्नम्, उक्तपक्षद्वयोक्तदोषतादवस्थ्यात्। अपि च भेदकस्य कुतो विचित्रता? विचित्रतदन्यभेदकत्वरूपकार्यान्यथानुपपत्त्या विचित्रताऽभ्युपगम्यते। ननु तर्हि तस्यापि विचित्रता न तदन्यभेदकमन्तरेण, तथा च सत्यनवस्था। नाप्यन्यतः, नियतिमन्तरेणान्यस्यानभ्युपगमात्। तद्व्यक्तिनिरूपितनियतित्वेन तद्व्यक्तिजनकत्वमित्यपि न श्रेयस्, तन्नियतिजन्यत्वेन तद्व्यक्तित्वसिद्धिः, तद्व्यक्तित्वसिद्धौ च तद्व्यक्तिनिरूपितत्वेन नियतिजन्यत्वसिद्धिरित्येवंरूपान्योऽन्याश्रयणात्, कार्यस्य कारणतानवच्छेदकत्वाच्चेति।

तदुक्तम्—

"नियतेर्नियतात्मत्वा–न्नियतानां समानता।
तथानियतभावे च, बलात्स्यात् तद्विचित्रता॥१॥
न च तन्मात्रभावादे–र्युज्यतेऽस्या विचित्रता।
तदन्यं भेदकं मुक्त्वा, सम्यग्न्यायाविरोधतः॥२॥
न जलस्यैकरूपस्य, वियत्पाताद्विचित्रता।
ऊषरादिधराभेद–मन्तरेणोपजायते॥३॥
तद्भिन्नभेदकत्वे च, तत्र तस्या न कर्तृता।
तत्कर्तृत्वे च चित्रत्वं, तद्वत्तस्याप्यसङ्गतम्॥४॥"इति।

ननु नियतेरेव कार्यवैचित्र्यप्रयोजकस्वभावोऽस्त्विति चेत्?

न, स्वभाववादप्रवेशेन नियतिवादस्य परित्यागप्रसङ्गात्, अथ परिपाक एव स्वभावो न हेत्वन्तरमिति चेत्? न, परिपाकेऽपि हेत्वन्तरस्यावश्यमाश्रयणीयत्वात्, नन्वाम्रादौ परिपाकद्वैविध्यदर्शनेऽपि नियतिपरिपाकः स्वभावत एवेति चेत्? तर्हि 'घटकुट्टयां प्रभात' इति न्यायापत्तिः स्यात्। अथ चोत्तरपरिपाके पूर्वपरिपाकः एव हेतुः, आद्यपरिपाके चान्तिमापरिपाक एवेत्यादिरीत्या विशिष्यैव कार्यकारणभावात् नायं दोष इति चेत्? न, एकत्र घटनियतिपरिपाके तदैवान्यत्रापि घटोत्पत्तिप्रसङ्गात्, प्रतिसन्तानं नियतिभेदाभ्युपगमे च द्रव्यपर्याययोर्नामान्तरमेव नियतिपरिपाकौ।

तथाचोक्तम्—

"तस्या एव तथाभूतः, स्वभावो यदि चेष्यते।
त्यक्तो नियतिवादः स्यात्, स्वभावाश्रयणान्ननु।१।" इति।

एतेन—'जगति ये केचन भावा भवन्ति ते नियतिजा एव' इत्यादिकं नियतिवादिना प्रोक्तमपास्तं द्रष्टव्यम्। यदुक्तं—'स्वभावस्य सत्त्वेऽपि मधुमासादावेव केचिदाम्रा अतिफलभारेण नम्रीभूता भवन्ति, केचित्तु वन्ध्या इत्यादितो नियतिं विमुच्य नान्यत् किमपि वीजं विश्ववैचित्र्ये पश्याम' इतिपर्यन्तम्। तत्रापि वन्ध्याम्रे तदन्येषां जीवानां तादृगदृष्टाभावेन तेषामनुत्पादः एव प्रयोजको मञ्जर्या व्याप्तस्याप्याम्रस्य स्तोकान्येव फलानि परिपक्वानि भवन्ति, न सर्वाणि, तत्रायुष्कर्मक्षयस्तेषां जीवानां कारणम्। कोकिलरक्षणे तु कोकिलस्यैव दीर्घजीवनं हेतुः। ब्रह्मदत्तस्यान्धत्वे तु चक्षुर्दर्शनावरणस्य तीव्रोदयत्वं कारणम्, द्विजगोपालौ तु तद्व्यञ्जकाविति

नियतेः निराकृतत्वेन यत् सजातीयविजातीयव्यावृत्तस्वभावानुगतेनैव रूपेण प्रादुर्भावत्वं नियतिकृतप्रतिनियतधर्मोपश्लेषत्वं वा हेतुत्वेनोपन्यस्तं तत् तीक्ष्णशस्त्रोपहतानां जीवनमरणाभ्यां व्यभिचारी, अस्माकं त्वायुःकर्मणो न्यूनाधिकत्वं तयोः कारणम्, नान्यत् किमपीति । तदेवं दण्डादिदृष्टकारणेषु सत्स्वपि घटोत्पादेऽनुत्पादे च भोक्तुरदृष्टं कारणं, दण्डादिदृष्टकारणं तु तद्व्यञ्जकमिति । तदुक्तं मलयगिरिपादैः धर्मसंग्रहणीवृत्तौ—

"घटादीनामपि तदुपभोक्तृदेवदत्तादिकर्मपरिपाकसामर्थ्यादेव तैलाद्युपभोगसंभवात्, समानमृदाद्युपादानानां समानकुम्भकारादिकर्तृकाणां समानस्थानस्थितानां समानतैलाद्याधेयानां समानविनाशहेतूपनिपातानामपि केषाञ्चिदेव भङ्गभावात् । यदि पुनरुपभोक्तृदेवदत्तादिकर्मपरिपाकसामर्थ्यात् घटादीनां न तथा तैलाद्युपभोग इष्यते तर्हि सर्वेषां युगपद् विनाशो भवेत्, न केषाञ्चिदेव तद्धि चन्धककारणान्तराभावात् । तस्मात् घटादीनामपि उपभोक्तृदेवदत्तादिकर्मविपाकसामर्थ्यसमुद्भवो विचित्रतैलाद्युपभोगः" इति ।

एवं मुद्गपक्तौ गजभुक्तकपित्थे नालिकेराम्भसि चादृष्टमेव कारणं, तदुक्तं प्रागपि—

"न च तत्कर्मवैधुर्ये, मुद्गपक्तिरपीक्ष्यते ।
स्थाल्यादिभङ्गभावेन, यत्कचिन्नोपलभ्यते ।१।" इति ।

'तत्कर्म वैधुर्ये' इति, उपभोक्तृकर्मवैधुर्ये इति मलयगिरिपादाः । दृष्टकारणानां तु सर्वत्रादृष्टव्यञ्जकत्वं बोध्यम् । एवं सुखदुःखादिकं प्रत्यदृष्टस्य जनकत्वं वाच्यम् । केवलानां पुरु-

षकारेश्वरस्वभावानामनभ्युपगमादेव निराकृतं, निराकरिष्यमाणं च । यच्च अदृष्टवादे 'पुरुषाद् भिन्नमभिन्नं वा' इत्यादि दूषणमभ्यधायि तदपेशलम्, तृतीयस्योभयरूपस्य पक्षस्य स्वीकारादिति । किञ्च नियतिवादिनां शास्त्रोपदेशोऽप्यकिञ्चित्करः तमन्तरेणापि सर्वसंभवात्, शुभाशुभफलप्रतिपादकशास्त्रप्रतिपादितशुभाशुभक्रियाजनितफलाभावश्चेति । तद्धेतुकत्वान्तर्भावितनियमस्य नियतिप्रयोज्यत्वे तु सिद्धमदृष्टमितरहेतुना पारिभाषिककारणत्वप्रतिक्षेपस्याबाधकत्वादिति । एवमन्यभेदकमन्तरेण स्वभावस्यापि कार्यवैचित्र्यप्रयोजकत्वं नोपपद्यते, एकरूपत्वात्तस्य स्वभावत एव युगपद् विश्वोत्पादप्रसङ्गोऽप्यापद्यते । न च तत[1] एव तस्य[2] क्रमवत्कार्यजनकत्वेन नानुपपत्त्यंशोऽपीति वाच्यम्, तस्यैव स्वभावस्य पूर्वोत्तरकार्यजनकत्वे पूर्वोत्तरकालयोरुत्तरपूर्वकार्यप्रसङ्गेन क्रमस्यैव व्याहतेः, एकस्यैव स्वभावस्य भिन्नाभिन्नजातिनियामकत्वस्वीकारे एकैकस्य विश्वजातीयत्वप्रसङ्गः, विश्वस्य वैकजातीयत्वप्रसङ्गश्च । ननु कालक्रमेणैव कार्योत्पत्तेः तत्तत्क्षणादिसहकृतस्वभावस्यैव विश्ववैचित्र्ये हेतुत्वमस्त्विति चेत्? न, कालवादप्रवेशात् । अथ क्षणिकस्वभावत्वे नायं दोष इति चेत्? न, एकजातीयहेतुं विना कार्यैकजात्यासंभवात् । अथ सामग्र्यपेक्षया लाघवात् कुर्वद्रूपत्वमेवास्तु कारणतावच्छेदकमिति चेत्? न, कुर्वद्रूपत्वस्य जातित्वाभावेन घटं प्रति घटकुर्वद्रूपत्वेन हेतुत्वस्य वक्तुमशक्यत्वात् सामग्रीत्वेन च कार्यव्याप्यत्वस्यौचित्येन गौरवस्यादोषत्वात्, प्रत्यभिज्ञादिसत्त्वेन क्षणिकत्वबाधाच्च ।

१ स्वभावतः. २ स्वभावस्य.

किञ्च कुर्वद्रूपसत्त्वे एकत्र घटोत्पत्तिः, नान्यत्रेत्यत्र देशनियामकहेतुत्वाश्रयणे स्वभाववादः परित्यक्तः स्यात्, कार्यमनुमायैव प्रेक्षावतां प्रवृत्तिश्च, अन्यथा कारणमन्तरेणापि कार्यसंभावनयैव निष्प्रकम्पप्रवृत्तिप्रसक्तेः। स्वभावहेतुस्वीकारे निर्हेतुकाः भावाः प्रभवन्तीत्यपि न युक्तम्, वदतो व्याघातात्, तदुक्तं–"न हेतुरस्तीति वदन् सहेतुकं, ननु प्रतिज्ञां स्वयमेव बाधते" इति। किञ्च स्वभावो भावरूपोऽभावरूपो वा?, भावश्चेत्? नानास्वभावः एकस्वभावो वा?, एकस्वभावोऽपि नित्योऽनित्यो वा?, न तावन्नित्यः, नित्यस्यैकरूपत्वेनार्थक्रियाकारित्वस्य क्रमयौगपद्याभ्यामसंभवात्। नाप्यनित्यः, एकत्वेन विरोधात्, प्रतिसमयं भिन्नभिन्नरूपेण भवनादनित्यस्येति। नानास्वभावोऽपि वस्तुविशेषः अकारणरूपो वा? वस्तुधर्मो वा? वस्तुविशेषोऽपि मूर्तोऽमूर्तो वा? मूर्तश्चेत्? कर्मणः सकाशादविशिष्टः, यतोऽदृष्टं मूर्तं विचित्रस्वभावमभ्युपगम्यते, स्वभावोऽपि भवतैवंविधः स्वीकृतः ततो न कोऽपि विशेष इति। अमूर्तश्चेत्? नासौ देहादीनामारम्भकः, अनुपकरणत्वात्, दण्डादिसामग्रीविकलकुम्भकारवत्। एवं सुखदुःखादिहेतुरपि न स्वभावोऽमूर्तत्वात्, जीवानामनुग्रहोपघातावपि न कर्तुं समर्थो गगनमिव। तदुक्तं–'जमणुग्गहोवघाया जीवाणं पुग्गलेहिंतो' इति वचनात्। ननु जीवेन व्यभिचारः तस्यामूर्त्तत्वेऽपि सुखदुःखयोः हेतुत्वादिति चेत्? न, एकान्तेनामूर्तत्वाभावेन व्यभिचाराभावात्। नन्वेकान्तेनामूर्तत्वाभावे किं बीजम्? क्षीरनीरवदनादिकर्मसन्तानपरिणामापन्नत्वमेव बीजं तस्य च बीजाङ्कुरभावेनेव परस्परं हेतु-

हेतुमद्भावात्, तथा च परमार्थतः न केवलो जीवो मूर्तसुखदुःखानुभवनिमित्तः, किन्तु सुखदुःखानुभवनिमित्तं कर्म, तन्निमित्तश्च सुखदुःखानुभव इति कुतो व्यभिचारः ?, नेत्यर्थः। नन्वेवं मुक्तात्मनो व्यभिचारः, न च तस्यापि मूर्तता कल्पयितुं शक्या, अनादिकर्मसन्तानपरिणामापन्नत्वाभावादिति चेत् ? न, मुक्तात्मनि सुखदुःखनिबन्धनयोः सातासातयोरभावेन सुखदुःखानुभवाभावात् । सुखदुःखोभयनिमित्तत्वमेव मुक्तात्मनां निषिध्यते, न केवलं सुखनिमित्तत्वमपि, साहजिकनिरुपमेयसुखस्वरूपत्वात्तस्येति। अपि चापरिणामिकारणत्वेन सुखदुःखनिबन्धनभूतं मूर्तत्वं मुक्तात्मनि निषिध्यते, न तु परिणामिकारणत्वम्, मुक्तात्मानश्च निरुपमेयसुखं प्रति परिणामिकारणत्वेन कथं तेन सह व्यभिचारः ? । यदि स्वभावोऽपि मुक्तात्मवदिष्यते, तर्हि तस्यापि जीवत्वं सदा सुखित्वं च प्रसज्यते, तथा च स स्वभावः कथं स्यात्, केवलं नामान्तरेण मुक्तात्मा एवाभ्युपगतः स्यात्, न च तत्र नो विप्रतिपत्तिः,

तदुक्तं—

"तस्स वि य तहाभावे, जीवत्तं चेव पावई वुत्तं ।
तहा कहं णु सो सहावो, सदा सुहित्तिपसंगो य ।१।"

इति ।

अत्र चेत्थमनुमानं स्वभावः सुखदुःखजनको न भवति, अपरिणामित्वे सति अमूर्तत्वात् यथा गगनम् । ननु गगनस्यापेक्षाकारणत्वेन सुखदुःखनिबन्धनत्वमस्त्येवेति कथं न साध्यविकलता निदर्शनस्येति चेत् ? न, अपेक्षाकारणस्य निर्व्यापारत्वात् परमार्थतोऽकारणत्वात्, अन्यथा निखिलविश्वस्य कारणताप्रसङ्गः, निर्व्यापारत्वाविशेषादिति । नाप्यका-

रणतास्वभावः, कारणमन्तरेण कार्यानुपपत्तेः, कारणाभावस्य समानत्वेन युगपन्निखिलविश्वोत्पादप्रसङ्गः, शशविषाणोत्पादप्रसङ्गश्च । अपि च यन्निर्हेतुकं तदाकस्मिकमेव प्रादुर्भवति आकस्मिकं च नाभ्रादिविकारवदादिमत्प्रतिनियताकारं भवति, दृश्यते चादिमत्प्रतिनियताकारं शरीरादिकार्यजातमतो नाकस्मिकं किन्तु कर्महेतुकमेवेति । अनुमानं चात्र शरीरादिकार्यमुपकरणसहितकर्तृनिर्वर्त्यमेवादिमत्प्रतिनियताकारत्वात् घटादिवत् । न च घटाद्यवस्थायामदृष्टमन्तरेणान्यदुपकरणमस्ति, यदेवोपकरणं तदेव कर्मेति । वस्तुधर्मश्चेत् ? मूर्तवस्तुनोऽमूर्तवस्तुनो वा ?, आद्ये सिद्धसाधनमस्माभिरपि पुद्गलास्तिकायपर्यायत्वेनादृष्टस्याभ्युपगमात् । अमूर्तवस्तुनो धर्मश्चेत् ? नासौ शरीरकारणममूर्तत्वादेव ज्ञानादिवत् गगनमिव वेत्युक्तपूर्वमिति । तस्मात् न स्वभावो भावरूपः । नाप्यभावरूपः, तथाहि—स हि अभावस्वरूपस्वभावः एकरूपः चित्ररूपो वा ?, एकरूपश्चेत् ? तुच्छैकस्वभावत्वेन न कार्यनिष्पत्तिः, यथा भेकजटाभारादिकारणाभावतः भेकजटादिर्न भवति तद्वत्कार्यनिष्पत्तिरपि न भवतीत्यर्थः, अन्यथा भेकजटादिकमपि स्यात् तुच्छैकस्वभावकारणत्वाविशेषात् । ननु मृत्पिण्डरूपाभावादेव घटो जायते, ततः कथमुच्यते तुच्छैकस्वभावत्वे न कार्यसिद्धिः, मृत्पिण्डरूपोऽभावो नैकान्तेन तुच्छरूपः स्वरूपभावात् । यदि एवं तर्हि अभावस्य तुच्छरूपता कथमिति चेत् ? घटलक्षणं भावमाश्रित्य स्वभावस्य तुच्छरूपता बोध्या, मृत्पिण्डस्य तु घटजनकत्वान्नोक्तदोषावकाश इति चेत् ? न, भावाभावयोः विरोधात्, तथाहि—य एव मृत्पिण्डस्य स्वरूपभावः स एव

घटस्वरूपस्याभावः कथं भवति ?, नासाद्यते कदापि यो भावः सोऽभावरूपतां, नाप्यभावो भावरूपतां तयोः परस्परविरोधात् । अथ स्वरूपापेक्षया भावरूपता पररूपापेक्षयाऽभावरूपता ततो न भावाभावयोर्भिन्ननिमित्तत्वेन कश्चित् विरोध इति चेत् ? तर्हि स्याद्वादकक्षाप्रवेशेन मुक्तः स्वसिद्धान्त इति । ननु मृत्पिण्डे घटरूपाभावो न परमार्थतः, किन्तु परिकल्पित एव ततो नानेकान्तवादे प्रवेश इति चेत् ? ननु तर्हि सूत्रपिण्डादौ घटप्रागभावाभावात् यथा न घटोत्पत्तिः तद्वत् मृत्पिण्डे घटप्रागभावाभावात् मृत्पिण्डात् कथं घटोत्पत्तिः ? अथ मृत्पिण्डादौ घटादिप्रागभावाभावेऽपि घटाद्युत्पत्तिरभ्युपगम्यते तर्हि खरशृङ्गमपि कथं नोत्पद्यते ? प्रागभावाभावत्वाविशेषात् । ततो न तुच्छैकस्वरूपस्वभावपक्षोऽपि क्षेमङ्कर इति । ननु भेकजटादेर्नोत्पत्तिप्रसङ्गः, अभावस्वरूपस्वभावस्य विचित्रस्वभावतास्वीकारादिति चेत् ? ननु कथमभावो विचित्रतास्वरूपः, यतो लोके घटपटादिभेदेन भावस्यैव विचित्रता दृष्टा, नाभावस्य, तुच्छरूपत्वेन तस्य सर्वत्र भावात् । तस्यापि विचित्रतास्वीकारे नामान्तरेण भाव एव विचित्रस्वभावः स्वीकृतः स्यात्, विचित्रतापि तत्तदर्थक्रियासामर्थ्यलक्षणं स्वभावभेदमन्तरेण न भवितुमर्हति, तथाभूतस्वभावभेदाङ्गीकारे भावरूपतैव सम्पन्ना, तथा च सति विश्ववैचित्र्यान्यथानुत्पत्त्या भावरूपस्य स्वभावस्य स्वीकारे नामविपर्यासमात्रमेवेदं कर्मापि भावरूपं विचित्रस्वभावमेवं भवदभिमतो भावोऽपीति । किञ्च स्वस्यात्मनो भावः स्वभाव इति स्वभावशब्दव्युत्पत्तिः, अयं स्वभावः कार्यगतः कारणगतो वा ? न तावत् कार्य-

गतः, कार्यस्य निष्पन्नत्वेन लब्धात्मलाभात्, अलब्धात्मलाभसम्पादनायैव हेतुता संगता, निष्पन्नस्यापि कार्यस्यालब्धात्मलाभे तु कार्यगतस्वभावस्याप्यलब्धात्मलाभः। ननु कार्यगतस्वभावो मास्तु विचित्रतानियामकः, कारणगतस्वभावस्तु तथास्त्विति चेत्? ननु कारणगतस्वभावः किं तस्मात् भिन्नोऽभिन्नो वा?, न तावत् भिन्नः, सर्वस्याऽपि वस्तुनः तन्नियामकताप्रसङ्गः, तथा च सति घटकारणगतस्वभावोऽपि पटविचित्रतानियामकः स्यात् भिन्नत्वाविशेषात्। नाप्यभिन्नः तथात्वे कारणमेव विचित्रतानियामकं न तद्गतस्वभावस्तस्मात्स्वभाववादो न वरीयानिति। एतेन कारणानुरूपमेव कार्यं प्रभवति न हि यवबीजाङ्कुराः गोधूमान् प्रदातुं प्रभवः, मनुष्यादिभवकारणं च पूर्वजन्म, तस्मात्परत्राप्येतद्भवतुल्यो भवः कल्प्यते, एवं यः पुरुषः स परत्रापि पुरुष एवैवं सर्वत्रापि बोध्यम्।

तदुक्तं—

"कारणसरिसं कज्जं बीजस्सेवंकुरो त्ति मण्णन्तो।
इह भवसरिसं सव्वं जमवेसि परेवि।"

इत्यादिप्रत्युक्तम्, विश्ववैचित्र्येऽदृष्टस्य कारणत्वाभिधानात्। तथापि किञ्चिदुच्यते, तथा हि—यच्चोक्तं कारणानुरूपमेव कार्यं तदप्येकान्तेन न रमणीयम्, यतः—शृङ्गात् शरः उत्पद्यते, सर्षपानुलिप्तात् शृङ्गात् धान्यसङ्घातः, दूर्वातो दूर्वा गोलोमाविलोमाभ्यामपि दूर्वोत्पद्यते, तथा विसदृशानेकद्रव्यसंयोगेन सर्पसिंहादिप्राणिनः मणिहेमादयश्चोत्पद्यन्ते।

तदुक्तं—

"जाइ सरो सिंगाओ भूतणओ सासवाणुलित्ताओ ।
संजायइ गोलोमाविलोमसंजोगओ दुव्वा ॥ १ ॥
इइ रुक्खायुवेदे जोणिविहाणे य विसरिसेहिंतो ।
दीसइ जम्हा जम्मं सुहम्म ! तो नायमेगन्तो ।२।" इति ।

दृश्यते च लोकेऽपि शालूकादपि शालूकः गोमयादपि शालूकः भवति, तथाग्नेरपि वह्निररणिकाष्ठादपि, बीजादपि वटादयः शाखैकदेशादपि, बीजादपि गोधूमा वंशबीजादपीति । यद्वा कारणानुरूपा कार्याणामुत्पत्तिः त्वया स्वीकृता तथैव जीवानामपि विचित्रता प्रतिपद्यस्व । ननु जीवानां वैचित्र्ये को हेतुरिति चेत् ? अदृष्टमिति ब्रूमः । ननु तर्हि कर्मणोऽपि विचित्रता किं निमित्तोद्भवेति चेत् ? मिथ्यात्वादिहेतुसंभवेति । अनुमानं चात्र नरकादिरूपेण संसारित्वं विचित्रं चित्रकर्मणां कार्यत्वात्, यथा लोके विचित्राणां कृषिवाणिज्यादिक्रियाणां फलमिति कर्मवैचित्र्यात् भवस्यापि विचित्रत्वं स्वीकुरु । पुद्गलपरिणामात्मकत्वेन विचित्रा कर्मपरिणतिरभ्रादिवदभ्युपगन्तव्या, यद्विचित्रपरिणतिरूपं न भवति तत्पुद्गलपरिणाममपि न भवति यथा गगनम् । पुद्गलपरिणामसाम्येऽपि ज्ञानावरणीयादिभेदेन विचित्रता सा ज्ञानप्रत्यनीकादिविशेषहेतुसमुद्भूताऽवसातव्येति । यद्वेह भवसदृशः परभवो भवतां सम्मतस्तथैवेह भवसदृशं कर्मफलमपि परत्र मन्यस्व, एतदुक्तं भवति—विचित्रगतिहेतुकविचित्रक्रियानुष्ठातॄणां प्रत्यक्षत उपलभ्यमानत्वेन परत्रापि तत्तत्क्रियाणां विचित्रं फलमेष्टव्यम् ।

यथेहत्यक्रियाणां विसदृशता स्वीक्रियते, तथैव परत्रापि जन्तूनां विसदृशताऽवश्यमाश्रयणीया स्यात्, न तु सदृशतेति । ननु या कापि क्रिया सैहिकफलजनिकैव कृष्यादेः सस्यादिफलवन्न परत्र फलजनिकेति कुतः परत्र जन्तुवैसादृश्यम्, तज्जनकक्रियाया एवाभावादिति चेत् ? ननु तर्हि भवदभ्युपगतं सादृश्यमपि परत्र कुतः ? सादृश्यजनकपारभविकक्रियाणां निष्फलत्वाभ्युपगमात् । ननु तज्जनककर्माभावेऽपि सादृश्यं स्वीक्रियत इति चेत् ? कृतनाशाकृताभ्युपगमः स्यात् । यद्वा दानहिंसादिक्रियाणां निष्फलत्वाभ्युपगमे मूलतो बन्धाभावः, बन्धाभावे च कर्माभावः, तदभावे च भवान्तराभावः, तदभावे च सर्वेषां मुक्तिप्रसङ्गः, सादृश्याभावश्चापद्यते । कर्माभावेऽपि भवस्वीकारे निष्कारण एवासौ स्यात्, तथा भवनाशोऽपि निष्कारण एव स्यात् । तथा च सति तपोनियमाद्यनुष्ठानं निष्फलतामापद्येत । तथा वैसादृश्यमपि निष्कारणं कथं नेष्यते विशेषाभावादिति । यद्वा सर्वं वस्तुजातं सादृश्यासादृश्यं किं पुनः परभवः । तथाहि—सर्वं वस्तुजातं पूर्वतनैः सामान्यविशेषपर्यायैर्व्युपरमति, उत्तरैः सामान्यविशेषपर्यायैरुत्पद्यते, द्रव्यत्वेन तादवस्थ्यम् । तथैव प्रमेयत्वादिभिः सर्वेषां वस्तूनां साधर्म्यमात्मत्वादिभिः वैधर्म्यमेवमात्मनोऽपि स्वभिन्नजीवैः सहात्मत्वेन साधर्म्यं स्वस्मिन्न वृत्तिज्ञानादिभिः सह वैधर्म्यम् । एवं सर्वत्रापि सादृश्यासादृश्यं वाच्यं न केवलं परत्रैवेति । सादृश्यमेव, वैसादृश्यमेव वेति तु भवितुं नैवार्हति, यत इहापि भवे बालत्वपर्यायं परित्यज्य यौवनपर्यायमनुभवति, यौवनपर्यायं परि-

त्यज्य वृद्धत्वपर्यायमनुभवतीति। किञ्च—यो यादृशः स परत्रापि तादृशश्चेत्? ईश्वरदरिद्रकुलीनाकुलीनादिरूपेणोत्कर्षापकर्षौ न स्याताम्, मा भूतां नः का क्षतिरिति चेत्? दानादिक्रियाणां निष्फलत्वापत्तिः, तथाहि—दानादिप्रवृत्तिरपि लोकानां देवादिसमृद्धात्मोत्कर्षार्थं भवति, उत्कर्षाभावे च यो दरिद्रः स दानतपोयात्रासंयमाद्यनुष्ठानं कृत्वापि परत्र दरिद्र एव स्यात्, तथा च सति दानादिक्रिया निष्फलतां प्राप्ता। एवं यो बालः स तव मते कदापि यौवनमपि न प्राप्नुयात्। युवा च वृद्धत्वं, किं बहुना! सर्वेऽपि स्तनपायिन एव तव मते प्राप्नुयुः, न चैवं दृश्यते। तस्मात्—"यो यादृशः स तादृश एव परत्रापि"—इति मुञ्च स्वाग्रहमिति।

एवं समयादिकालोऽपि न विश्ववैचित्र्ये हेतुः समयादेः कस्यचिद्वस्तुनोऽनुत्पत्तेः, अन्यथा विवक्षितसमयादौ कार्यान्तरोत्पादप्रसङ्गः। नारेकणीयं च तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणत्वेन हेतुत्वमुक्तमेवेति, अग्रेतनभाविनः तत्क्षणवृत्तित्वस्यैव फलत आपाद्यत्वात्, तत्क्षणवृत्तिकार्ये तत्पूर्वक्षणत्वेन हेतुत्वं तदुत्तरक्षणविशिष्टे कार्ये तत्क्षणत्वेनैव वेति विनिगमनाभावाच्च। किञ्च—समानेऽपि काले मृत्पिण्डे घटः न तन्तुष्वतोऽपि कालातिरिक्तदेशादिनियामकस्य हेतुत्वेनाश्रयणीयत्वं स्यात्। ननु मृत्पिण्डादन्यत्र घटस्यानुत्पत्तिरेव देशादिनियामिकाऽस्तु कालहेतुसत्त्वेऽपि देशे कार्यानुपपत्तेरिति चेत्? न, जन्यतासम्बन्धेन मृद्भिन्नत्वेन मृदवृत्तित्वस्यापाद्यत्वात्। अथ तन्नियामकं तत्स्वभावत्वेन क्वाचित्कत्वमुक्तमेवेति चेत्? न, फलतः तत्स्वभावत्वस्यैवापाद्यत्वादिति।

तदुक्तं—

"कालोऽपि समयादिर्यत्केवलः सोऽपि कारणम् ।
तत एव ह्यसंभूतेः, कथञ्चिन्नोपपद्यते ॥ १ ॥
यतश्च काले तुल्येऽपि, सर्वत्रैव न तत्फलम् ।
अतो हेत्वन्तरापेक्षं, विज्ञेयं तद्विचक्षणैः॥२॥"इति।

एवं विश्ववैचित्र्यं कर्मकृतं सिद्धमपि नियत्यादिसापेक्षं बोध्यमन्यथा स्याद्वादभङ्गप्रसङ्गः ।

तदुक्तं—

"अतः कालादयः सर्वे, समुदायेन कारणम् ।
गर्भादेः कार्यजातस्य, विज्ञेया न्यायवादिभिः ॥ १ ॥
न चैकैकत एवेह, क्वचित्किञ्चिदपीक्ष्यते ।
तस्मात् सर्वस्य कार्यस्य,सामग्री जनिका मता॥२॥"इति।

कालादयश्चत्वारोऽपि स्वातन्त्र्येण हेतवः इत्येके, केचित्तु कालादृष्टे एव स्वातन्त्र्येण हेतू, नियतिस्वभावावदृष्टधर्मत्वेन विवक्षितौ । दृष्टादृष्टसाधारण्येन नियतिः स्वभावश्च सर्वस्य वस्तुनो धर्माविति ।

तदुक्तं श्रीमद्धरिभद्रसूरिपादैः शास्त्रवार्तासमुच्चये—

"स्वभावो नियतिश्चैव, कर्मणोऽन्ये प्रचक्षते ।
धर्मावन्ये तु सर्वस्य, सामान्येनैव वस्तुनः ॥१॥" इति ।

यथा सामग्री कार्यजनिका तथा प्रतिपाद्यते, तथाहि—ब्रह्मदत्तचक्रिणो निजं द्विजमित्रं प्राप्यैवावश्यं भावितीव्रचक्षुर्दर्शनावरणोदयादन्धत्वं तत्र मुख्यतया कर्मातिशयातिशायितपरिणतिरूपा नियतिः कारणमेवमन्यत्रापि तथाविधकार्ये कारणत्वं

नियतेः वाच्यम् । तथोद्यमतोऽपि कार्यं जायते, यतः कार्यं प्रायशः क्रियातो भवति, क्रिया च पुरुषकारायत्ता प्रवर्तते ।

तदुक्तं—

"न दैवमिति संचिन्त्य, त्यजेदुद्यममात्मनः ।
अनुद्यमेन कस्तैलं, तिलेभ्यः प्राप्तुमर्हति ॥१॥" इति ।

दृश्यते च समानेऽपि पुरुषकारे फलवैचित्र्यम्, तत्र पुरुषकारवैचित्र्यं कारणम्, क्वचित्समानेऽपि पुरुषकारे फलाभावो दृश्यते, तत्राऽदृष्टं कारणं स्वीकरणीयम् । तथा बकुलचम्पकाशोकपुन्नागसहकारादीनां विशिष्ट एव काले फलोद्भवः न सर्वदा, न च कालस्यैकरूपत्वेन कार्यवैचित्र्यं न भवतीति नोद्यम्, अदृष्टस्यापि स्वीकारात् । तथा स्वभावोऽपि कारणं, तथाहि—आत्मनः उपयोगलक्षणत्वमसङ्ख्येयप्रदेशत्वममूर्तत्वं पुद्गलानां मूर्तत्वं सुखदुःखोभयजनकत्वं चयोपचयत्वं धर्मास्तिकायस्य गत्युपष्टम्भकत्वमधर्मास्तिकायस्य स्थित्योपष्टम्भकत्वमाकाशास्तिकायस्यावकाशदातृत्वं कालस्य वर्तनापर्यायजनकत्वमित्यादिकार्यजातं स्वभावापादितम् । व्यतिरिक्ताव्यतिरिक्तपक्षस्तु न दोषजनकः, उभयधर्मावच्छिन्नस्य स्वभावस्य कार्यजनकत्वस्वीकारात् । अत्र स्वभावः तथाभव्यत्वात्मिका जातिः कार्यैकजात्याय कल्पनीयेति । तथेश्वरोऽपि विश्ववैचित्र्यजनकः । अत्रेश्वर आत्मा तत्र तत्रोत्पत्तिद्वारेण सर्वत्र व्यापनात् व्यापकः तस्य सर्ववादिभिः सुखदुःखादिजनकत्वेन स्वीकारादिति । तथा कर्मणः वैचित्र्यजनकत्वं प्राक् सविस्तरमुक्तमेव, तदेवं सामग्री कार्यजनिकेति प्रतिपादितम् ।

अत्रेदमवधेयं संसारान्तर्वर्तिसकलवादिप्रतिवादिवृन्दकलाकलापकौशल्यावलोकनकुशलाकलनकलाकलापपरिकलितचेतोभिर्भवान्तर्वर्तिविश्वातत्त्वतत्त्वहेयोपादानकुशलधीधनैरुपेक्षणीयेषु माध्यस्थ्यभावसज्जनैः। यद्यपि सर्वे आस्तिकाः, नानाविधविधानधुरन्धराक्षुण्णप्रत्यक्षप्रभृतिप्रमाणप्रथाप्रतीयमानघटपटलकुटशकटकटप्रभृतिपदार्थसार्थान् व्यवहारमात्रतः स्वीकुर्वतः तत्त्वदृष्ट्याऽपोहप्रवीणान् वेदान्तिनो विहाय, विश्ववैचित्र्यान्यथानुपपत्त्येकलक्षणाद्धेतोर्भवान्तरानुयायिन आत्मनः शुभाशुभसाधनसमर्थमदृष्टं तत्त्वदृष्ट्यानुपचरितमङ्गीकृतवन्तः।

प्रमाणयन्ति चात्र वेदान्तिनः ब्रह्मभिन्नमसत् प्रतीयमानत्वात् मरुमरीचिकावत्। ये ये द्रव्यादयः पदार्थाः विश्वे दरीदृश्यन्ते ते ते मतिभ्रमनिमित्तकाः न पुनः तत्त्वदृष्ट्या वर्तन्ते। एतदनुमानान्तःपातिनः कर्मणोऽपि तादवस्थ्यम्। तथा च श्रुतिः—"अविनाशी वारेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इति। एतन्निखिलमतिकष्टेन सङ्घातीकृतमहत्तृणपुञ्जनिक्षिप्तचित्रभानुसीकरसाध्यम्, तथाहि—प्रत्यक्षेण विधीयमानपदार्थसार्थस्यानुमानादिनाऽपलपितुमशक्यत्वेन घटादौ प्रत्यक्षबाधः, ब्रह्मभिन्नघटादौ घटासत्त्वविरुद्धत्वेन विरुद्धः, साध्याभाववद्वृत्तित्वेन घटादौ तव निर्धर्मके ब्रह्मणि च व्यभिचारः, ब्रह्मभिन्नमसन्न भवितुमर्हति प्रतीयमानत्वादिति प्रत्यनुमानेन सत्प्रतिपक्षितः। किञ्च—ब्रह्मभेदः प्रसिद्धो न वा ?, प्रसिद्धश्चेत् ? द्वैतापत्तिः, अप्रसिद्धश्चेत् पक्षासिद्धिः। एवं साध्यमपि सदसद्वा, सच्चेत् ? द्वैतापत्तिः, असच्चेत् ? अनुमानायासव्यर्थतेत्येवं संभावनीया अनु-

मानदोषा अपि । कुत्राप्यत्यन्तासत्त्वधर्मस्यासत्त्वेन दृष्टान्तेऽपि अन्यत्र स्थितसद्रूपजीवनप्रत्यासत्तिः प्रतिभासते क्षारभूमौ, न तु सर्वथाऽविद्यमानो धर्मः । श्रुतेरपि द्वैतव्याप्यत्वेनाद्वैतं प्रति प्रामाण्यासंभवेन वाच्यवाचकभावस्य द्वैतरूपेण प्रतिभासादिति दिक् । तच्चादृष्टं पौद्गलिकम् ।

अत्र वेदान्तिनः चर्चयन्ति—नन्वविद्यावरणमेव कर्म न पौद्गलिकं, मूर्तेन कर्मणा रूपातीतविज्ञानस्यावारयितुमशक्यत्वात्, अन्यथा शरीरादेरप्यावारकत्वप्रसङ्गः स्यादिति चेत् ? न, मूर्त्तेनापि मदिरादिना रूपातीतविज्ञानस्यावारकत्वदर्शनात् । अमूर्ताया अविद्याया आवारकत्वे तु गगनादेरप्यावारकत्वमविद्यावत् स्यात्, अमूर्तत्वाविशेषात् । ज्ञानाविरुद्धत्वेन गगनस्य नावारकत्वमिति चेत् ? तर्हि ज्ञानाविरोधित्वात् शरीरस्यापि मा भूदावारकत्वं विरुद्धस्यावारकत्वप्रसिद्धेः, न च मिथ्याज्ञानोदये प्रवाहेण प्रवर्तमानस्य ज्ञानादेः निरोधादविद्याया एव ज्ञानविरोधित्वं न गगनादेरिति वक्तव्यम्, पौद्गलिककर्मोदये प्रवाहेण प्रवर्तमानस्य ज्ञानादेः शरीरेण सह विरोधाभावात्, तथा चानुमानप्रयोगः—आत्मनो मिथ्याज्ञानादिः पुद्गलविशेषसम्बन्धनिबन्धनः तत्स्वरूपान्यथाभावात् मद्यपोन्मादवदिति । ननु कर्मणः पौद्गलिकत्वे किं मानम् ?, अनुमानमिति ब्रूमः । तथाहि—अदृष्टं पौद्गलिकमात्मनोऽनुग्रहोपघातनिमित्तत्वात् शरीरवत् । नन्वात्मनोऽनुग्रहोपघातनिमित्तत्वमस्तु पौद्गलिकत्वं मास्तु भोगनिर्वाहकात्मधर्मस्योदयनाचार्यादिभिरुक्तत्वादिति चेत् ? न, कार्यैकार्थप्रत्यासत्त्या सुखादिहेतुत्वेऽसमवायिकारणत्वप्रसङ्गात् । न चात्मगुणभिन्नत्वे सतीति विशेषणं वा-

च्यम्, तत्र प्रमाणाभावात् । किञ्चादृष्टस्यात्मगुणत्वे सति सर्वदा बन्धाभावेन सर्वेषां मुक्तिप्रसङ्गः, विरोधेन च स्वपारतन्त्र्यनिमित्तत्वमपि न स्यात् । तथाहि—आत्मनः पारतन्त्र्यनिमित्तमदृष्टं न भवति घटस्वरूपवत् । स्वीकृतं च त्वया दृष्टस्यात्मगुणत्वमतः पारतन्त्र्यनिमित्तत्वमदृष्टस्य न भवितुमर्हति, प्रमाणप्रतीतं चात्मनः पारतन्त्र्यं, तथा चानुमानम्, आत्मा कर्मपरतन्त्रः हीनस्थानपरिग्रहवत्त्वात् मद्योद्रेकपारतन्त्र्याशुचिस्थानपरिग्रहवद्विशिष्टपुरुषवत् । हीनस्थानं हि शरीरमात्मनो दुःखहेतुत्वात् न च देवशरीरे दुःखाभावात् भागासिद्धोऽयं हेतुरिति वाच्यम्, तस्यापि च्यवनसमयेऽतिदुःखहेतुत्वप्रसिद्धेः । यदधीन आत्मा तदेव वाऽदृष्टसंज्ञकं कर्मेति सिद्धं कर्मणः पौद्गलिकत्वमत्राप्यनुमानम्, तथा हि—पौद्गलिकं कर्मात्मनः पारतन्त्र्यनिमित्तत्वात् कारागारवत् । न च निगडादौ व्यभिचार इति वाच्यम्, तस्य पारतन्त्र्यस्वभावत्वात्, यः खलु पारतन्त्र्यस्वभावः स न पारतन्त्र्यनिमित्तं भवितुमर्हतीति ।

अत्र सांख्याः प्रलपन्ति—सुष्ठूक्तमदृष्टमात्मगुणो न भवतीति प्रधानपरिणामत्वात्तस्य, तदुक्तं—"प्रधानपरिणामः शुक्लं कृष्णं च कर्म" इति । तद्गगनारविन्दवन्मनोरथमात्रम्, प्रधानाभावेन तत्परिणामत्वस्यासंभवात् । तत्परिणामत्वेऽपि वात्मपारतन्त्र्यनिमित्तत्वाभावात् न कर्मत्वं तस्यान्यथा घटादावप्यतिप्रसक्तिः । न च प्रधानपारतन्त्र्यनिमित्तत्वात् कर्मत्वं तस्येत्यारेकणीयम्, एवं रीत्या प्रधानस्यैव बन्धमोक्षयोः संभवेनात्मकल्पनायाः वैयर्थ्यप्रसङ्गात् । न च बन्धमोक्षफलानुभवस्यात्मनि प्रतिष्ठानात् न तत्कल्पनावैयर्थ्यप्रसङ्ग इति वाच्यम्,

वक्ष्यमाणानुमानेन प्रधानस्य तत्कर्तृत्ववत्तद्भोक्तृत्वप्रसङ्गात्, अन्यथा कृतनाशाकृताभ्युपगमप्रसङ्गः। अत्र प्रयोगः—प्रधानं बन्धफलानुभोक्तृ बन्धाधिकरणत्वात् कारागारबद्धतस्करवत्। न चात्मनः चेतनत्वात् भोक्तृत्वं न प्रधानस्येति वक्तव्यम्, मुक्तात्मनोऽपि कर्मफलानुभवप्रसङ्गात्। ननु मुक्तात्मनः प्रधानसंसर्गाभावात् न फलानुभवनमिति चेत्? तर्हि संसारिण एव प्रधानसंसर्गात् बन्धफलानुभवनं प्राप्तं तथा चात्मन एव बन्धः सिद्धः, बन्धफलानुभवनिमित्तस्य प्रधानसंसर्गस्य बन्धरूपत्वात् बन्धस्यैव संसर्गः पुद्गलस्य च प्रधानमिति नामान्तरमेव कृतं स्यादिति दिक्।

कर्मणां पौद्गलिकत्वे सिद्धे तेषामनन्तशक्तिमत्त्वेन विचित्रतापि नानुपपन्ना। तत्तत्कर्मणां विशिष्यादृष्टहेतुत्वस्यावश्यकत्वेन वैजात्यकल्पने मानाभाव इत्यपि न सुन्दरम्, तव मतेऽपि कीर्त्तननाश्यतावच्छेदकत्वेनावश्यकत्वात्तस्य, अदृष्टत्वस्य स्वाश्रयजन्यताविशेषसम्बन्धेनाश्वमेधत्वादिघटितस्य कीर्त्तननाश्यतावच्छेदकत्वे तु गौरवमित्यलमप्रासङ्गिकेन। तद्वैचित्र्यमपि बन्धहेतुत्ववैचित्र्येऽपि संक्रमकरणादिकृतं परिणतप्रवचनानां सुज्ञानमिति। नन्वदृष्टकार्याणां देहादीनां मूर्त्तिमत्त्वेन "कारणानुरूपं कार्यम्" इतिवचनाच्चादृष्टस्य मूर्त्तत्वापत्तिरिति चेत्? इष्टापत्तिः। अथामूर्त्तत्वेन सुखादिकार्याणां कथमिष्टापत्तिः निर्वाह्या इति चेत्? न, कार्यानुरूपा कारणकल्पना तूपादानादिकारणस्थले एव, नादृष्टस्थले, सुखादिकं प्रति तस्य निमित्तकारणत्वात्, निमित्तकारणादौ च तत् कल्पने घटं प्रत्याकाशस्य बुद्ध्यादिकं प्रति नागरस्य मद्यपानादेश्च तत्कल्पनापत्तिरिति।

प्रयोगाश्चात्र—मूर्तमदृष्टं तत्सम्बन्धेन सुखादिसंवित्तेराहारादिवत्। तथा मूर्त्तमदृष्टं तत्संसर्गेण वेदनोद्भवादग्निवत्। मूर्तमदृष्टमात्मव्यतिरिक्तत्वे सति परिणामित्वात् पयोवदिति। अदृष्टस्य शरीरादेश्च परिणामित्वदर्शनात् नायमसिद्धो हेतुः। मूर्त्तमदृष्टं मूर्त्तस्य देहादेः बलाधानकारित्वात् यथा घटो निमित्तमात्रभावित्वेन बलमाधत्ते, एवं कर्मापि। तथा मूर्त्तमदृष्टं मूर्त्तेन स्रक्चन्दनाङ्गनादिनोपचयलक्षणबलस्याधीयमानत्वात् घटवत्, यथा मूर्त्तेन तैलादिना बलस्याधीयमानत्वात् कुम्भो मूर्त्तः, एवं स्रक्चन्दनाङ्गनादिनोपचीयमानत्वात् मूर्त्तं कर्म्मेति, तथा मूर्त्तमदृष्टं देहादेः तत्कार्यस्य मूर्त्तत्वात् परमाणुवत्, यथा परमाणूनां कार्यं घटादिकं मूर्त्तं दृष्टमत एव तत्कारणीभूतानां परमाणूनामपि मूर्त्तता कल्प्यते, तद्वत् मूर्त्तस्य शरीरादेः कर्मणः कार्यत्वेन तस्यापि मूर्त्तता कल्प्यते। ननु देहादीनां कर्मकार्याणां मूर्त्तत्वेन मूर्त्तं कर्म यद्वा सुखदुःखादीनां तत्कार्याणाममूर्त्तत्वेनामूर्त्तं कर्मेत्यपि संशयो न कर्त्तव्यः, सुखादीनां न केवलं कर्मैव कारणं, किन्तु जीवोऽपि, सुखादीनां समवायिकारणं जीवः, असमवायिकारणं तु कर्म। इदमत्र हृदयं—सुखादेरमूर्त्तत्वेन समवायिकारणस्य जीवस्यामूर्त्तत्वमस्त्येव, असमवायिकारणस्य तु कर्मणः सुखाद्यमूर्त्तत्वेनामूर्त्तत्वं न भवत्यपीति नोक्तशङ्कावकाशः। अत एवास्माभिरनुपदमेवोक्तं कार्यानुरूपा कारणकल्पना तूपादानकारणस्थले एव इति। नन्वमूर्त्तस्यात्मनः मूर्त्तिमताऽदृष्टेन सह कथमनुग्रहोपघातौ स्यातां ?, न च भवतः खड्गादिभिः सह नभसोऽनुपग्रहोपघाताविति चेत् ? न, मूर्त्तैः मदिरादिभिः नागरादिभिश्चात्मधर्माणां बुद्ध्यादीनामनुग्रहोपघातदर्शनात्। यद्वा-

त्मनः कथञ्चिन्मूर्त्तत्वेऽपि न क्षतिः, अनादिकर्मसन्तानपरिणामप्राप्तत्वेन क्षीरनीरवत् कर्मणोऽनन्यत्वात् । आकाशस्यानुग्रहोपघातावचेतनत्वेनामूर्त्तत्वेन च न स्यातामिति ।

तदुक्तं—

"मुत्तेणाममुत्तिमओ, उवघायाणुग्गहा कहं होज्जा ? ।
जह विण्णाणाईणं, मइरापाणोसहाईहिं ॥ १ ॥
अहवा णेगंतायं, संसारी सव्वहा मुत्तो त्ति ।
जमणाइकम्मसन्तइ, परिणामावन्नरूवो सो ॥ २ ॥
सन्ताणोऽणाईओ, परोप्परं हेउहेउभावाओ ।
देहस्स य कम्मस्स य, गोयम ! बीयंकुराणं व ।३।" इति ।

नन्वमूर्त्तं कर्म वासनारूपत्वादिति चेत् ? न, वासनायाः निराकरिष्यमाणत्वात् । किञ्चामूर्त्तं कर्म न भवति आकाशवत्प्रागुक्तानुग्रहोपघाताभावात् । तथाहि—सत्त्वानामनुग्रहमुपघातं वा यथा गगनं न किमपि करोति तद्वदत्रापीति । न चाकाशेऽमूर्त्तत्वादन्यदकरणनिमित्तमस्ति किन्त्वमूर्त्तत्वमेव, अत्रापि चामूर्त्तत्वमविशिष्टमिति । ननु कुत्रचिद्देशे सुखमनुभूयते, यथोष्णकालेऽर्बुदाचले, कुत्रचित्तु दुःखं, यथोष्णकाले मरुस्थले गौर्जराणामिति साधनविकलता दृष्टान्तस्येति चेत् ? न, तत्रापि गगनव्यतिरिक्तजलादिनिमित्तत्वात् । तथाहि—वातबहुलस्य पुंसो निर्जले देशे सुखं सजले दुःखं, न च सुखं दुःखं वा शुद्धक्षेत्रोद्भवं तस्य सर्वत्राप्यविशेषात् तस्मात् सुखादीनां जलाद्यन्वयव्यतिरेकानुविधायित्वात् न साधनविकलता निदर्शनस्येति ।

नन्वस्तु वासनारूपं कर्मेति चेत् ? न, तव मते वासाति-

रिक्तवासकाकल्पनेन पुष्पादिगन्धवैकल्ये तिलादौ वासनाप्रसङ्गः स्यात्, अतिरिक्तवासककल्पने तु तदेवादृष्टम्, परमार्थसदतिरिक्तकर्मास्वीकारे तु वासना न युक्ता। न चासत्ख्यात्युपनीतादृष्टभेदाग्रहात् ज्ञानवासनेति वाच्यम्, पुष्पादिगन्धभेदाग्रहेऽपि तैलादिगन्धेषु तद्वासनाप्राप्तेः, ज्ञानवासना तूक्तरूपा तैलादिगन्धवासना न तथेत्यपि न संगतम्, अदृष्टभेदग्रहात् ज्ञाने वासनानिवृत्तत्वे त्विदानीमेव निर्वाणप्राप्तिप्रसङ्गः, औत्तरकालिकभेदाग्रहप्रयोजकदोषसत्त्वेन नेदानीं वासनानिवृत्तिरिति चेत्? तर्हि दोषाभावविशिष्टभेदग्रहाभावो वासनेति पर्यवसितं तथा चात्माश्रयः, वासनायाः एव दोषत्वात्। ज्ञानमात्रं वासनेत्यपि न सुन्दरम्, वासितत्वाभावेन सदैव मुक्तिः स्यात्। अथ विशिष्टं ज्ञानं वासना तदाऽविशेषितज्ञानस्य वैशिष्ट्यं न स्यात्, विशेषकल्पने तु तदेवादृष्टम्। नन्वेकसन्तानगामित्वेन क्षणिकतत्तज्ज्ञानप्रवाहरूपा वासनाऽतो नानुपपत्तिः, नापि शिष्यज्ञानेन गुरोर्वासनापत्तिश्चेति चेत्? न, क्षणपरम्परातिरिक्तसन्तानस्वीकारेऽतिरिक्तद्रव्याभ्युपगमप्रसङ्गात्तदेवास्माकं कर्मेति। किञ्चातिरिक्तवासकाभ्युपगमेऽपि क्षणिकदर्शने वास्यकाले वासकस्याभावेन कुतो वासनासंभवः?, समेत्य स्थितयोः वास्यवासकयः वासनाभावः संगच्छते, पुष्पादितैलादीनां तथादर्शनात्, नासमेत्य स्थितयोः। अपि च वासकाद् वासना भिन्ना अभिन्ना वा?, भिन्ना चेत्? वासकस्य कः संसर्गः घटादिवन्न कोऽपीत्यर्थः। घटादयोऽपि च कथं न वासयन्ति ज्ञानादिकं, संसर्गाभावत्वाविशेषात्। एकक्षणवर्तित्वेन च वासनोत्पत्तेरनभ्युपगमे वासनाशून्यमन्यं कथं

वासयति घटादिवत् । वासकात् वासनाऽभिन्ना चेत्? कथं तर्हि वासनीये वासनायाः संक्रमः?, वासनाया वासकानतिरिक्तत्वात् स्वरूपवत्, संक्रमाभावे च वासकात् न युक्ता वास्यस्य वासनेति । अथ दृष्टहानिभिया कथमपि वास्ये वासनासङ्क्रमः स्वीक्रियते । एवं सति वास्यवासकभावसम्बन्धोऽपि नानुपपन्नः, अवृक्षव्यावृत्त्या वृक्षत्वसामान्यवत् वासनायाः परिकल्पितत्वेन भेदाभेदोक्तदोषावकाशोऽपि नेति चेत्? न, वासनायाः कल्पितत्वेन व्यवहारानङ्गत्वात्, अन्यथा कल्पितस्य गगनारविन्दस्यापि व्यवहारप्रसङ्गात् ।

तदुक्तं—

"सिय वासणातो गम्मइ, सा वासगवासणिज्जभावेण ।
जुत्ता समेच्च दोण्हं, न तु जम्माणंतरहतस्स ॥ १ ॥
सा वासणातो भिन्नाऽभिन्ना व हवेज्ज? भेदपक्खंमि ।
को तीए तस्स जोगो, तस्सुण्णो वासइ कहं च ॥ २ ॥
अह णो भिन्ना कह तीए, संकमो होइ वासणिज्जम्मि? ।
तदभावम्मि य तत्तो, णो जुत्ता वासना तस्स ॥ ३ ॥
सति यण्णाय पसिद्धी, पक्खंतरमो य नत्थि इह अण्णं ।
परिकप्पिता तई अह, ववहारगं ततो कह णु ॥४॥" इति ।

तदेवं वासनारूपमपि कर्म न भवति । ननु मास्तु वासनारूपं कर्म आत्मशक्तिरूपत्वस्वीकारे का क्षतिरिति चेत्? ननु साऽऽत्मनो भिन्नाऽभिन्ना वा?, अभिन्ना चेत्? आत्मस्वरूपैव, भिन्ना चेत्? जन्याऽजन्या वा?, जन्या चेत्? तदुत्पत्ताववश्यमात्मव्यतिरिक्तं हेत्वन्तरमाश्रयणीयं स्यात्? अन्यथाऽऽकस्मि-

कत्वापत्तेः। ननु दानादिक्रियासम्बन्धादात्ममात्राजन्यत्वे सति आत्मव्यतिरिक्ताऽसाधारणकारणजन्यत्वमेव सेति चेत्? न, आत्मनोऽनुपचये तस्या अप्रादुर्भावात्, दानादिक्रियातः तदुपचये पुष्टिहेतुत्वेनादृष्टसिद्धिरावश्यकीति जन्यपक्षोऽपि भवतां न क्षेमङ्करः, नाप्यजन्यपक्षः, तथाहि—अजन्यापि सा किमावृतानावृता वा?, आवृता चेत्? समीहितमस्माकं 'यदेवावरणं तदेव कर्म' इति। अनावृता चेत्? अहर्निशं स्वर्गादिकार्यं कथं न जनयति?, व्यञ्जकाभावादिति चेत्? ननु तत्र कस्य व्यञ्जकत्वं?, दानादिक्रियाया इति चेत्? न, व्यर्थैव व्यञ्जकत्वकल्पना, नित्यनिवृत्तत्वेनावरणाऽयोगात्। नित्यायाः शक्तेः कार्यान्तरं प्रत्यनावृत्तत्वेऽपि प्रकृतकार्यं प्रत्याभिमुख्यभावात् तत्रावरणकल्पनेत्यर्धजरतीयन्यायस्वीकारेऽपि कर्मरूपता स्वीकृतैवेति।

यदुक्तं—

"अस्त्येव सा सदा किन्तु, क्रियया व्यज्यते परम्।
आत्ममात्रस्थितायां न, तस्या व्यक्तिः कदाचन॥१॥
तदन्यावरणाभावाद्, भावे वास्यैव कर्मता।
तन्निराकरणाद् व्यक्ति-रिति तद्भेदसंस्थितिः।२।" इति।

किञ्च—सा शक्तिः स्वर्गादिजनने समर्थाऽसमर्था वा?, समर्था चेत्? क्रमेण स्वर्गादिजनिका युगपद्वा?, न तावत् क्रमेण, यतः कथं न जनयेत् नरत्वाद्युत्पत्तौ कालान्तरभावि स्वर्गादिकम्, समर्थस्य कालक्षेपायोगात् कालक्षेपे चासामर्थ्यप्राप्तेः। ननु समर्थाऽपि सहकारिसन्निधिमपेक्षत इति चेत्? तर्हि तस्या असामर्थ्यं अपरसहकारिसापेक्षवृत्तित्वात्। ननु सा

नापेक्षते, किन्तु नोत्पाद्यते स्वर्गादिकं दानादिक्रियां विनाऽतोऽपेक्षत इति चेत्? न, समर्थस्य प्रसह्य घटनात्, अन्यथा तस्या असामर्थ्यप्राप्तेः । ननु समर्थमपि बीजं भूमिजलादिसामग्रीं प्राप्यैवाङ्कुरं जनयति नान्यथेति चेत्? ननु तर्हि दानादिक्रिया शक्तेरुपक्रियेत न वा?, नोपक्रियेतेति चेत्? तर्हि दानाद्यभावत इव दानादितोऽपि न जनयति, उपकाराकरणात् । यद्युपक्रियेत तदा स उपकारः शक्तेर्भिन्नोऽभिन्नो वा?, भिन्नश्चेत्? स कथं दानादिक्रियाजन्य एव, न हननादिक्रियाजन्यः, उभयोरपि संसर्गाभावत्वाविशेषात् । अभिन्नश्चेत् शक्तिरेव कृता स्यात्?, तथा च लाभमिच्छतो मूलतो हानिः समायाता । यद्वाऽस्तु यथाकथञ्चित्स्वर्गादिप्रयोजिका दानादिक्रिया, तथापि दानादिक्रियाकाल एव स्वर्गादिकं कथं न जनयति?, ननु क्रियाजन्यावरणध्वंससहकृता सा कालान्तर एव जनयतीति चेत्? न, तदपेक्षयाऽदृष्टस्यैव स्वविपाककाले फलजनकत्वौचित्यात् । तस्मान्नात्मशक्तिरूपमदृष्टमिति । तदेवं विश्ववैचित्र्यनिर्वाहकमनेकजातीयं सत्स्वरूपं मूर्त्तं शक्तिवासनादिपक्षनिर्वाहक्षमं पौद्गलिकमदृष्टं सिद्धम् ।

तदुक्तं श्रीमद्भिः हरिभद्रसूरिपादैः—

"तस्मात्तदात्मनो भिन्नं, सचित्रं चात्मयोगि च ।
अदृष्टमवगन्तव्यं, तस्य शक्त्यादिसाधकम् ॥१॥" इति ।

अथ कर्मणो दर्शनपरिभाषोच्यते—तत्राऽदृष्टमिति वैशेषिकाः, संस्कार इति सौगताः, पुण्यपापे इति वेदवादिनः, शुभाशुभे इति गणकाः, धर्माधर्माविति साङ्ख्याः शैवाश्च । एवमेते दर्शनपरिभाषाजनिताः व्यञ्जनपर्यायाः ज्ञातव्याः ।

नन्वात्मनोऽमूर्तत्वेन मूर्तेन कर्मणा सह कथं संसर्ग इति चेत् ? आकाशेन घटादीनामिव क्रियया द्रव्यस्येव क्षीरनीरमिव वेति वाच्यः। यद्वा किं निदर्शनान्तरावलोकनेन प्रत्यक्षोपलभ्यमानस्थूलशरीरेणात्मनः इव कार्मणशरीरस्यापि संयोगो नानुपपन्नः ?। अत्र धर्माधर्मनिमित्तं स्थूलशरीरं स्वीकुर्वाणं तार्किकं पृच्छामः, भो तार्किकशिरोमणे ! भवदभिमतौ धर्माधर्मौ मूर्त्तौ अमूर्त्तौ वा ?, मूर्त्तौ चेत् ? अमूर्त्तेनात्मना सह तयोः कथं संसर्गः ?, यथा कथञ्चिद्भवतीति चेत् ? तर्हि कर्मणोऽप्यात्मना सह संसर्गः कथं नेष्यते, अमूर्तौ धर्माधर्माविति चेत् ? बाह्येन स्थूलशरीरेण सार्धं कथं तयोः संसर्गः ?, तव मते मूर्तामूर्तयोः संसर्गाभावात्। न चासम्बद्धयोरपि तयोः स्थूलशरीरेण सह संसर्ग इति वाच्यम्, अतिप्रसङ्गात्, यद्यमूर्तयोरपि तयोः स्थूलशरीरेण साकं संसर्ग इष्यते, तर्हि कार्मणशरीरेण साकं कथं विरोधमुद्भावयसि ?, नन्वेवं मास्तु स्थूलशरीरेणापि साकं संसर्गस्तयोरिति चेत् ? तर्हि स्थूलशरीरस्यात्मना साकं तु संसर्गो दूरोत्सारित एव, तथा च सति देवदत्तशरीरोपघातो यथा यज्ञदत्तस्य दुःखादिकं न जनयति, संसर्गाभावात्, तद्वत्स्थूलतन्वा सह संसर्गाभावे देवदत्तशरीरोपघातो देवदत्तस्यापि दुःखादिकं न जनयेत् ?, संसर्गाभावत्वाविशेषात्, तथा च सति दृष्टेष्टविरोधः। तथाहि—शरीरस्यानुग्रहादिनिमित्तत्वेनानुभवगम्याः सुखादयो दृष्टाः। न च शरीरानुग्रहादिनिमित्तान्यनिमित्तान्तरमिति वक्तुं शक्यते, शरीरानुग्रहादिनिमित्तेन सहान्वयव्यतिरेकदर्शनात्। अन्वयव्यतिरेकानुविधानेऽपि निमित्तान्तरमुपकल्पेत तर्हि सर्वत्र प्रतिनियतकार्यकारणभावोच्छेदप्रसङ्गः।

तथा चोक्तं—

"यस्मिन् सति भवत्येव, यत्तत्ततोऽन्यकल्पने ।
तद्धेतुत्वं च सर्वत्र, हेतूनामनवस्थितिः ॥१॥ इति ।

ननु शरीरानुग्रहादिनिमित्तत्वाभावेऽपि प्रशान्तमनोयोगादिभावतोऽपि सुखादयो दृष्टा इति चेत्? न, प्रशान्तचित्तादिभावतः सुखादीनां भावेनावश्यं शरीरस्यानुग्रहादिभावात् । ननु मनोयोगे सति कथं तनुयोगस्यानुग्रहादयः, विभिन्नद्रव्यत्वादिति चेत्? सत्यम्, काययोगेनैव मनोयोगपुद्गलानां गृहीतत्वेन काययोगविशेष एव मनोयोगः स एव प्रशान्तचित्तादिः, ततो न दोष इति दृष्टविरोधः । तथेष्टविरोधोऽपि, तथाहि—शरीरस्य पूजनव्यापत्ती आत्मनः सुखदुःखनिमित्ते इष्टे, आत्मशरीरयोरत्यन्तभेदे चेष्यमाणे न च ते युक्ते, न चेष्टापत्तिः कर्तुं शक्यते, तथा दर्शनात् । ननु शरीरस्य पूजनव्यापत्ती नात्मनः सुखदुःखनिमित्ते भवतः, प्रतिमाप्रतिपन्नस्य देहव्यापत्तावपि ध्यानबलेनैकान्तसुखोपेतत्वात्, चन्दनादिसन्निधानेऽपि कामार्त्तस्य कामोद्रेकवशतः दुःखदर्शनादिति चेत्? न, अनध्यात्मिकसुखस्यैव[1] साधयितुमिष्टत्वात्, प्रतिमाप्रतिपन्नस्य कामावेशवतश्चाध्यात्मिकसुखादे[2]रनुभवसिद्धत्वेऽपि पूजनव्यापत्तिनिमित्तत्वस्य प्रतिषेद्धुमशक्यत्वादितीष्टविरोधः । तदेवमात्मशरीरयोः संसर्गाभावे दृष्टेष्टविरोधदर्शनादवश्यं तयोः संसर्गः एष्टव्यः, तथैव कर्मण्यपि, विशेषाभावादिति । तदेवमुक्तः आत्मकर्मणोः संसर्गः ।

---

१ बाह्यसुखस्यैव । २ मानसिकसुखादेः ।

ननु सिद्धेऽप्यात्मप्रदेशैः सह कर्मणां संसर्गे क्षीरनीरवदग्नितप्तायोगोलकवद्वाऽविभागेन स न युक्तः, अन्यथा मोक्षाभावप्रसङ्गः, जीवप्रदेशैः सह कर्मणामविभागेनावस्थानात्। तथा चानुमानम्—जीवात् कर्म नापैति क्षीरनीरवदग्नितप्तायस्पिण्डवदात्मप्रदेशैः सहाविभागेनावस्थानात् जीवप्रदेशसमूहवत्, यद्येन सहाविभागेन व्यवस्थितं तत्तेन सह न विमुच्यते, यथात्मनः स्वप्रदेशसमूहः, इष्यते च जीवकर्मणोरविभागो भवद्भिः। तत एव जीवात् कर्म सर्वदापि नापैति, कर्मापगमाभावे चानिशं जीवानां सकर्मकत्वे मोक्षाभावः। ननु तर्ह्यात्मप्रदेशैः सह कर्मणां कमिव संसर्ग इति चेत्? सर्पकञ्चुकवदिति ब्रूमः, यथा—कञ्चुको विषधरमनुगच्छति, तथापि कालान्तरेण कञ्चुकं विषधरो मुञ्चति, एवं कर्मापि जीवमनुगच्छति स्थितिपरिपाकेन तु मुच्यत इति न मोक्षाभाव इति चेत्? अत्रोच्यते, काञ्चनोपलयोरविभागेन स्थितयोरपि वियोगो दृष्टः तद्वत्कर्मणोऽपि जीवेन सहाविभागेन स्थितस्य ज्ञानक्रियाभ्यां वियोगो भवति, यथा मिथ्यात्वादिबन्धहेतुभिरविभागेन संयोगो भवति तद्वद्वियोगोऽपि भवतीत्यर्थः। इदमत्र हृदयम्—जीवस्याविभागेनावस्थानं द्विधा भवति, कर्मणा सहाकाशेन च। यदाकाशेन सहावस्थानं तन्न वियुज्यते, सर्वाद्धामवस्थानात्। कर्मणा सहाविभागावस्थानं तदप्यभव्यानां न वियुज्यते, भव्यानां तु तथाविधज्ञानदर्शनचारित्रतपःसामग्रीसद्भावे कर्मसंयोगो वियुज्यते, वह्न्यौपध्यादिसामग्रीसत्त्वे काञ्चनोपलयोः संयोगवदिति। तथाविधसामग्र्य-

भावे तु कदाचिद्भव्यानामपि कर्मवियोगो न भवति, "नो चेव णं भवसिद्धियरविहिए लोए भविस्सइ" इति वचनात् । ननु तर्हि भव्याः कथं व्यपदिश्यन्त इति चेत्? योग्यतामात्रेण, न च योग्यः सर्वोऽपि विवक्षितपर्यायेण युज्यते, तथाविधदारुपाषाणादीनां प्रतिमादिपर्याययोग्यानामपि तथाविधसामग्र्यभावतः तदयोगात् । ततश्चाविभागेनावस्थानलक्षणो हेतुर्दृश्यमानवियोगैः क्षीरनीरकाञ्चनोपलादिभिरनैकान्तिकः । ततो यथा कर्मग्रहणे तीव्रमन्दमध्यमभेदभिन्नोऽशुभपरिणामो हेतुः, तद्वत् कर्मवियोगेऽपि तीव्रादिभेदभिन्नः शुभपरिणामरूपो हेतुः स्वीक्रियते ।

ननु कञ्चुकवत् जीवे स्पृष्टमेव कर्म स्वीक्रियते नतु बद्धमिति तत्र भवतां पृच्छामः—किमात्मनः प्रतिप्रदेशं वृत्तं सदुच्यते, आहोस्वित् त्वक्पर्यन्ते वृत्तं सदुच्यते? आद्ये साध्यविकलता दृष्टान्तस्य, नभसेव कर्मणा जीवस्य प्रतिप्रदेशं व्याप्तत्वात् यथोक्तस्पर्शनलक्षणस्य साध्यस्य कञ्चुकेऽभावात् । द्वितीये भवात् भवान्तरं संक्रमतोऽन्तराले तदनुवृत्तिर्न प्राप्नोति त्वक्पर्यन्ते वृत्तत्वेन तदनुगमाभावात् बाह्यमलवदिति । नन्वन्तराले कर्माभावे का क्षतिरिति चेत्? सर्वेषां जीवानां संसाराभावं विना नान्या कापि, ननु निष्कारण एव संसार इति चेत्? तर्हि निष्कारणत्वाविशेषात् मुक्तानामपि संसारापत्तिस्तपोब्रह्मचर्याद्यनुष्ठानवतामपि संसारापत्तिश्च। कञ्चुकवत् त्वक्पर्यन्तवर्तिनि कर्मणीष्यमाणे सति शरीरमध्यवर्तिशूलादिवेदना किंनिमित्ता?, तत्कारणस्य कर्मणोऽभावात् । न च निष्का-

रणा वेदना स्वीकर्तव्येति वाच्यम्, सिद्धानामपि तत्प्रसङ्गात्। नन्वन्तर्वेदना लकुटघातादिजन्यबाह्यवेदनानिमित्तेति चेत्? ननु तर्हि लकुटघातादिजन्यबाह्यवेदनाभावेऽन्तर्वेदना कथमनुभूयते? ततस्तत्कारणभूतेन मध्येऽपि कर्मणा भाव्यमिति सिद्धोऽसत्पक्षः। ननु त्वक्पर्यन्तवर्त्यपि कर्म मध्येऽपि शूलादिवेदनां जनयति, न पुनः मध्ये कर्मेति चेत्? ननु तर्हि यज्ञदत्तशरीरगतं कर्म देवदत्तशरीरवेदनामपि कथं न जनयति? विभिन्नदेशस्थितत्वाविशेषात्। ननु त्वक्पर्यन्तवर्त्यपि कर्म यज्ञदत्तशरीरस्य बहिरन्तः संचरति, तत उभयत्रापि वेदनां जनयति, न शरीरान्तरे, तत्र संचरणाभावादिति चेत्? न, कञ्चुकवत् बहिरेव तिष्ठतीति नियमस्य भङ्गप्रसङ्गात्। किञ्च संचरणमपि न युज्यते, यतः संचरणत्वस्वीकारे बहिरन्तः क्रमेण वेदना स्यात्, न चैवमुपलभ्यते, लकुटादिघाते सति युगपदुभयत्रापि वेदनादर्शनादिति। अपि च संचरिष्णु कर्माभ्युपगमे भवान्तरं तन्नानुगच्छति, उच्छ्वासनिःश्वासानिलवत्, तथा च सर्वेषां संसाराभावप्रसङ्गः। ननु सिद्धान्तेऽपि कर्मणः चलनमुक्तं तथा च भगवत्यां–"चलमाणे चलिए" इति। अत्र चलनं संचरणमेवोक्तमिति कथं भवद्भिस्तदत्र निषिध्यत इति चेत्? न, अभिप्रायापरिज्ञानात्, तथाहि–"नेरईए जाव वेमाणिए जीवाउ चलियं कम्मं निज्जरइ" इत्यादिवचनात्। तथा "निर्जीर्यमाणं निर्जीर्णं" इति वचनाच्चागमे यच्चलितं कर्म निर्जीर्णमुक्तं तदकर्मैव भणितम्, तच्चाकाशपरमाण्वादेरिव मध्यगतमपि न वेदनां जनयितुमलम्, सामर्थ्याभावादिति कर्मणः संचरणं न युक्तमतो न कञ्चुकवत् त्वक्पर्यन्तवर्त्यैव

कर्म, किन्तु जीवस्य प्रतिप्रदेशवर्तीति स्थितम् । तथा चानुमानं—आत्मनः प्रतिप्रदेशं विद्यते कर्म, सर्वत्रात्मनि वेदनासद्भावात् शरीरे त्वगिव । तथा मिथ्यात्वादीनां कर्मबन्धकारणानामात्मनि सर्वत्र सद्भावात् तत्कार्यभूतं कर्मापि सर्वत्रात्मनि विद्यते न पुनः बहिरेवेति क्षीरनीरवदग्नितप्तायोगोलकवद्वाऽविभागेनैव स्थितं कर्मेति सिद्धम् ।

ननु मूर्तेन कर्मणा साकमात्मनः सिद्धेऽपि संसर्गे मिथ्यात्वादिहेतुभिः जीवेन क्रियत इति व्युत्पत्तिबलात् कर्मणः कृतकत्वेन सादित्वं प्राप्तम् । तथा च सति पूर्वं कर्मवियुक्तत्वेन मिथ्यात्वादिहेत्वभावात् कथमादौ कर्मणां बन्धः ?, निर्हेतुकबन्धे च मुक्तात्मनामपि बन्धः प्राप्नोति, निर्हेतुकत्वाविशेषादिति चेत् ? न, कृतकत्वेन सादित्वेऽपि प्रवाहतोऽनादित्वात् । ननु नियतव्यक्त्यपेक्षया प्रवाहतोऽपि कृतकत्वेन कथमनादितेति चेत् ? न, अतीतकालवत् प्रवाहतोऽनादित्वात्, तथाहि—अनुभूतवर्तमानभावेऽपि भूतकालः प्रवाहतो यथाऽनादिः ।

तदुक्तम्—

"भवति स नामातीतः प्राप्तो यो नाम वर्तमानत्वम् ।
एष्यश्च नाम स भवति यः प्राप्स्यति वर्तमानत्वम्॥१॥"

—इति ।

तद्वत्कर्मणोऽपि प्रवाहतोऽनादित्वं भविष्यतीति ।

तथा चाहुः श्रीमद्धरिभद्रसूरिपादाः—

"सव्वं कयगं कम्मं णयादिमंतं पवाहरूवेण ।
अनुभूयवत्तमाणातीतद्धा समय मो णातं ॥१॥" इति ।

ननु कालस्य कथमनादित्वमिति चेत्? ननु तर्हि कालस्य सादित्वे सति परिणामिकारणत्वाभावेन तस्य निर्हेतुकताप्रसङ्गः, तथा च सति निर्हेतुकत्वाविशेषेण खरशृङ्गवत् सर्वशून्यतापत्तेः। यद्वा परिणामिकारणाभावे शशशृङ्गादीनामप्युत्पत्तिः स्यात्, निर्हेतुकत्वाविशेषादिति। ननु कालसिद्धौ प्रमाणाभावेन कुतस्तस्य निदर्शनसिद्धिरिति चेत्? न, कालानभ्युपगमेऽतीतादिव्यवहाराभावप्रसङ्गात्, प्रतिनियतकालभाविशीतोष्णवनस्पतिपुष्पादिसंभवान्यथानुपपत्तिलक्षणप्रमाणविरोधाच्च। ननु जीवाजीवव्यतिरिक्तः कश्चिद्द्रव्यभूतः कालो न स्वीक्रियते, किन्तु द्रव्यावस्थानलक्षणः स्वीक्रियत एव। तथा चोक्तं प्रज्ञप्त्यां—"जीवा चेव अद्धा अजीवा चेव अद्धा" इति। तथा अतीतादिव्यवहारोऽपि तदपेक्षया भविष्यतीति चेत्? सत्यम्, परं द्रव्यावस्थानमपि न पूर्वावस्थानमन्तरेण दृष्टं, यतः परिणामिकारणमन्तरेण कस्यापि वस्तुनोऽनुपपत्तेः। कथञ्चित्पूर्वावस्थात्यागोत्तरावस्थान्तरापत्तिरूपत्वेन परिणामिकारणस्येति निदर्शनसिद्धिः कथं न भवति।

तदुक्तं—

"तस्स वि य आदिभावे अहेतुगत्ता असंभवो चेव।
परिणामिहेतुरहियं नहि खरसिंगं समुब्भवइ॥१॥
कालाभावे लोगादिविरोधो तीयमादिववहारा।
अह सो दव्वावत्था सा वि ण पुव्विं विणा दिट्ठा॥२॥

ननु जीवकर्मणोरनादिसंयोगे सिद्धे मोक्षाभावप्रसङ्गः, यतो योऽनादिसंयोगः सोऽनन्तो दृष्टः यथात्मनभसोः। न चाका—

शेन सह कदापि जीवस्य संयोगो निवर्तते । एवं कर्मणोऽपि जीवेन सह संसर्गो वाच्य इति चेत्? नायमेकान्तः, यतोऽनादिसंयुक्तयोरपि वस्तुनोः सन्तानः सान्तो दृष्टः, तथाहि—बीजाङ्कुरयोर्मध्येऽन्यतरदनिवर्तितकार्यमेव यदैव विनष्टं तदैव तयोः सन्तानोऽपि विनष्टः, एवं कुर्कटाण्डकयोः पितृपुत्रयोरपि वाच्यम् । यद्वा काञ्चनोपलयोरनादिकालप्रवृत्तसन्तानभावगतोऽपि संयोगोऽग्नितापाद्यनुष्ठानात् व्यवच्छिद्यतेऽतो न मोक्षाभाव इति । नन्वाकाशजीवयोरिव काञ्चनोपलयोरिव वा परस्परमनादिसंयोग इति चेत्? उभयथापि न विरोधः, तथाहि—अभव्यानामाकाशजीवयोरिव भव्यानां काञ्चनोपलयोरिवानादिसन्तानगतः संयोगो वाच्य इति ।

न्यायाम्भोनिधिश्रीमद्विजयानंदसूरीश्वरपट्टपूर्वाचलानन्य-
नभोमणिश्रीमद्विजयकमलसूरीश्वरपट्टविभूषण-वाचक-
चन्द्रश्रीमद्वीरविजयविनेयावतंसक-सिद्धान्तपार-
दृश्व-भट्टारक-श्रीमद्विजयदानसूरीश्वरचर-
णभृङ्गायमाणेन पन्न्यास-प्रेमविजयग-
णिनाऽलेखि कर्म्मसिद्धिः ।



# "प्रशस्तिः।"

"संसारतापानलतप्तशान्त्यै, सा सुप्रभुश्चन्द्रकलाप्रभेव ।
गङ्गेव मोहात्कृतपातकानां, मनोमलक्षालनमातनोतु ॥ १ ॥
रमेव रूपं पठतां मनांसि, क्षमेव विद्यां समलङ्करोतु ।
धर्म्मं तथा मोक्षपदं दधाना, पुनः पुनर्मङ्गलमातनोतु ॥२॥
विद्यामृतानन्दरसैकपूर्णा, सत्सेव्यमाना सरलार्थरूपा ।
नेत्राष्टनन्दैकमितेऽब्दसंख्ये,समाप्तिमगमत्किलकर्म्मसिद्धिः३

शुभोऽभूदाचार्योऽसौ जगति विजयानन्दपदभाक्,
तदीये पट्टेऽस्मिन् विजयकमलाचार्यः सुतनुः ।
तदीये साम्राज्ये विविधविमलानन्दभुवने,
महोपाध्यायः श्रीविजयपरवीरः समभवत् ॥ ४ ॥
तदीयान्तेवासिप्रभुविजयदानाख्यविदुषा,
पदं प्राप्तं सूरेर्विजयकमलेभ्योऽतिपरमम् ।
पदाद्येन प्रेम्णा विजयपदयुक्तेन मुनिना,
न्यगादीयं दानोत्तरविजयसूरेः सुशिशुना ॥ ५ ॥
याते वर्षे करशरयुगाक्षिप्रमे ज्ञातसूनोः,
मोक्षं प्राप्तात् सकलजगतीभावभासाय भानोः ।
शिक्षायैषा विजयिविजयानन्दसूरीश्वराणाम्,
स्वर्गारोहाद् रदपरिमिते सत्पथज्ञापकानाम् ॥ ६ ॥
उत्सूत्रं यत् सूत्रितं किञ्चिदत्र बुद्धेर्मान्द्याद् बाह्यानाभोगतोऽपि ।
स्यान्मे मिथ्यादुष्कृतं तत्त्वविद्भिर्मय्याधायानुग्रहं शोधनीयम्७"